ओ३म्

श्रीमन्महर्षिपिङ्गलाचार्यप्रणीतम्

# छन्दःसूत्रम्

वर्तमानकविरत्नाऽखिलानन्दशर्म्म
प्रणीतवैदिकभाष्योपेतम्
तस्येदं प्रथमसंस्करणम्

तच्च

मेरठ नगरस्थे स्वामिमेशीनयन्त्रे-हरदोईप्रान्त
प्रतिष्ठित थमरवां पत्तनाधिपतिनाऽवैतनिक
न्यायाधिपतिना श्रीयुत "केदारनाथ
वर्मणा" निजव्ययेन मुद्रापय्य
प्रकाशितम्

सर्वथा राजनियमे योजितम्

शालिवाहनशकः [ १८३० ] विक्रमादित्य संवत् [ १९६५ ]

( ख्रिस्ताब्दाः १९०९ )

प्रथमवारम् १००० मूल्यम् ।।।)

मार्गव्ययः ‌=)

Publisher-P. Akhilanand Sharma of Chandra Nagar ( Budaun )

1710 Printer-Tulsi Ram, Swami Machine Press Meerut.

March 1909

ओ३म्

# निदर्शिका

अयि सभ्यमहोदयाः !

ज्ञातवृत्तास्तावद्भवन्तु तत्रभवन्तोभवन्तः ॥

सर्वलोकोपकारदत्तान्तरैर्महामहिमपिङ्गलाचार्यैर्यदिदमपूर्वं वेदानां प्रथमाङ्गं कवीनां नयनभूतं छन्दःसूत्र मरचि तदवश्यमध्येतव्यमिति देवदेवैर्दयानन्दस्वामिभिरपि तत्र तत्र प्रतिपादितम् ॥

अस्मिन्नधीते सति वैदिक लौकिक वृत्तपरिज्ञानं-काव्य रचनानैपुण्यं च सुतरामेव निष्पद्यत इति सर्वैरनुमतम् । परं सूत्राणामतिकठिनत्वात्षडङ्गेष्वस्य विलक्षणरीतिनिदर्शकत्वादसाधारणतयैवास्य मर्मज्ञानमुक्तम् ॥

साधारणतयाऽनायासेन परिज्ञानं तु भाष्यमन्तरा न समुचितमिमाप्स्यतीति मत्वाऽयमायासारम्भः ॥

यद्यप्यस्मिन्नाद्ये वेदाङ्गे हलायुधकृता वृत्तिस्तत्र तत्रोपलभ्यते, परं सा न तादृशबोधोत्पादिका यादृशबोधस्यावश्यकता साम्प्रतमनुभूयते ॥

उदाहरणान्यपि तस्यामत्यश्लीलार्थबोधकान्येवेति मत्वा बहुभिर्जनैः सा नाद्रियते ॥

गुरुकुलान्तर्गतब्रह्मचारिणां तु—तादृशोदाहरणदर्शनमेवासमञ्जसम्, तद्विरुद्धश्रृङ्गारचेष्टोत्पादकत्वात् ॥

छन्दोज्ञानं तु मुख्यतया तेषामपि समुपयोगीति मया ऽन्यैश्चानेकैर्महाशयैरनुमतम्, तद्विना काव्यरचनाऽभावात् ॥

मया चेदं छन्दः शास्त्रं महताऽऽयासेन–श्रीमद्विष्णुदत्त शास्त्रिभ्योऽधिगतमासीत्। तेषामेव कृपया सकलार्यसामाजिकजनहिताय गुरुकुलगतशिष्यबोधाय च निजामपि विद्यां सर्वोपकारद्वारा सफलयिष्यता मया नूतनोदाहरण संबद्धमेतद्वैदिकभाष्यमारभ्यते ॥

अस्य च भाष्यस्य निर्माणे–नानापुस्तकानामत्यावश्यकतया मया त्रयोदशसंख्याकानि पुस्तकान्यतिप्राचीनानि नानाराजधानीभ्यः समानीतान्यासन् ॥

तेषु क्वचित्सूत्राल्पत्वं, क्वचित्प्रकरणवैपरीत्यमिति नानादोषसमुद्गमेन महापरिश्रमलब्धनिजतातपादपुस्तकमेव सर्वोपरि मत्वा पूर्णमिदं सङ्कलितम् ॥

न केवलमेतद्वेदस्य प्रथमाङ्गं वृत्तपरिज्ञानमेवानुविधत्ते, प्रत्युत नानासदुपदेशानपि ग्रन्थारम्भ एव निदर्शयति। बुद्धिमहिमानमनुमोदयता महर्षिणाऽस्य बुद्धिवर्द्धकत्वं स्वयमेवानुमतम्। तद्यथा–" धी श्री स्त्री मिति " ग्रन्थारम्भसूत्रं गुरुशिष्यसंवादमुखेन महर्षिणोपन्यस्तम्। गुरुश्चोपदिशति–गुरुकुलेष्वध्ययनेन पूर्वं धीर्बुद्धिः समुत्पद्यते। सा च श्रीसमुत्पादिका भवति। बुद्धिपूर्वकत्वाद्विभूतेः। श्रीश्च स्त्रियमासादयति, धनमूलकत्वाद्गृहस्थाश्रमस्य। परं सा बुद्धिर्वरा श्रेष्ठा चेत्। कुबुद्धिस्तु न कदापि सुखमनुभवतीति प्रसिद्धम् ॥

एवं सुबुद्धिमाहात्म्यमाकथयन्तमाचार्यं तत्प्राप्तये शिष्य आह–

तस्या बुद्धेः का गुहा ? किं स्थानं ? यत्रासाववतिष्ठते । निबोधयेति पृष्टे गुरुराह–

वसुधा=पृथिव्येव तादृशबुद्ध्युत्पादिकाऽतस्तस्यामेव सद्गुरूणां सम्भवात् । नात्र त्वया विस्मयः कार्यः ॥ एवमुक्ते शिष्यः पुनराह–

सा धीस्त्वया कथिता पृथिव्यां क्व स्थितेन पुरुषेणोपलभ्यते ? गुरुराह–गृहे स्थितेन ॥ भूयोपि शिष्य आह–कदा स गृहस्थस्तां धियमाप्नोति ? गुरुराह–

धरादिपरो=धारणार्थावबोधपरः । धारणाशक्तिमन्तरा तादृशबुद्धेरनुपगमात् ॥

एवमुक्ते शिष्यः पुनराह–भो गुरो ! किं कुर्वञ्जनस्तां धियमाप्नोति ? वद ॥ गुरुराह–नरुसन्=हासादिचापलमकुर्वन् । चञ्चलतया तादृशी बुद्धिर्न हृदयपथमलंकरोतीत्यर्थः । एतावता–सुबुद्धिरेव सर्वविभवोत्पादिकेति स्फुटमेव महर्षिणा निदर्शितम् । सा सुबोधमन्तरा नोत्पद्यते, बोधश्च छन्दोमूलक इति मत्वा ममाऽयमुद्यमः ॥

अत्र च पाणिनिमुनिप्रणीताष्टकवदष्टावेवाध्यायानिबद्धाः सन्ति । तत्र च पादसङ्कलनाऽत्र चाधिकारसङ्कलनेत्येतावाम् भेदः । प्रत्यध्यायमधिकारनिदर्शनं विषयसूचीपत्रे द्रष्टव्यम् ॥

प्रस्तारादिविवेचनं तु ग्रन्थाङ्गतया ग्रन्थान्ते स्वयमेव निदर्शयिष्यत इति प्रत्येतव्यम् । एवं साङ्गोपाङ्गमेतद्भाष्यं सर्वे विद्वांसो विद्यार्थिनश्च पश्यन्तु, येनाहमपि सफलप्रयत्नो भवेयम् ॥

इयत्पुनरभ्यर्थये, यन्ममाल्पज्ञतया क्वचिद्विषये पतनं स्यात्तदनुकम्पया सर्वैरपि क्षन्तव्यमेवेति सर्वमवदातम् ॥

भवदनुग्रहभाजनम्

आर्यशिरोभूषणकाव्यप्रणेता वर्त्तमानकविरत्नम्

अखिलानन्द शर्मा शास्त्री

| ङ झ ञ ट ठ ढ ण त थ फ ब भ म र ल व ष हाः | क ख ग घ च छ ज ड द ध न य श स क्षाः |
|---|---|
| अशुभाक्षराणि | शुभाक्षराणि |

## प्रत्यध्यायं सूत्रनिर्देशकोष्ठम्-

| अध्यायाङ्कः | सूत्रसंख्याङ्कः |
|---|---|
| १ | १५ |
| २ | ३० |
| ३ | ६६ |
| ४ | ५४ |
| ५ | ४४ |
| ६ | ४९ |
| ७ | ३७ |
| ८ | ३४ |
| योगः | ३२९ |

---

## साङ्केतिकसंख्यासूचकशब्दकोष्ठम्-

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
|---|---|---|---|---|---|---|---|---|---|
| चन्द्र ईश्वर | नेत्र-यज्ञ | गुण-काल | वेद-युग | भूत-यज्ञ | अङ्ग-शास्त्र | मुनि-स्वर | वसु-याम | ग्रह-निधि | दिक् दोष |
| ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० |
| रुद्र | सूर्य | विश्वे-देव | भुवन | तिथि | कला | दिक् स्वर | दिग् वसु | दिग्ग्रह | नख |

| संज्ञा- | वृत्तिः | वृत्तभेदाः- | वृत्तसंख्या- |
|---|---|---|---|
| उक्था | १ | २ | १ |
| अत्युक्था | २ | ४ | १ |
| मध्या | ३ | ८ | १ |
| प्रतिष्ठा | ४ | १६ | १ |
| सुप्रतिष्ठा | ५ | ३२ | १ |
| गायत्री | ६ | ६४ | १ |
| उष्णिक् | ७ | १२८ | १ |
| अनुष्टुप् | ८ | २५६ | ४ |
| बृहती | ९ | ५१२ | २ |
| पङ्क्तिः | १० | १०२४ | ६ |
| त्रिष्टुप् | ११ | २०४८ | १२ |
| जगती | १२ | ४०९६ | १६ |
| अतिजगती | १३ | ८१९२ | ४ |
| शक्वरी | १४ | १६३८४ | ४ |
| अतिशक्वरी | १५ | ३२७६८ | २ |
| अष्टिः | १६ | ६५५३६ | १ |
| अत्यष्टिः | १७ | १३१०७२ | ५ |
| धृतिः | १८ | २६२१४४ | १ |
| अतिधृतिः | १९ | ५२४२८८ | १ |
| कृतिः | २० | १०४८५७६ | २ |
| प्रकृतिः | २१ | २०९७१५२ | १ |
| आकृतिः | २२ | ४१९४३०४ | १ |
| विकृतिः | २३ | ८३८८६०८ | २ |
| संस्कृतिः | २४ | १६७७७२१६ | १ |
| अतिकृतिः | २५ | ३३५५४४३२ | १ |
| उत्कृतिः | २६ | ६७१०८८६४ | २ |

ओ३म्

सर्वशक्तिमते जगदीश्वराय नमः

# छन्दःसूत्रम्

अनादिमजरं देवं प्रणम्य परमेश्वरम् ।
भाष्यं पिङ्गलसूत्रस्य वैदिकं वितनोम्यहम् ॥ १ ॥

अथ तत्र भवान्पिङ्गलाचार्यो महर्षिर्लौकिकवैदिकवृत्तयोः सामान्यतया परिज्ञानाय वेदस्य प्रथमाऽङ्गभूतं कवीनां नयनरूपं छन्दः शास्त्रं व्यावृण्वानः प्रथमं गणरूपप्रत्यायकानि संज्ञासूत्राणि समातनोति ॥

गणाश्चात्र शास्त्रे द्विविधाः । वर्णमात्राभेदात् । मात्रा गणानां [लःसमुद्रागणः]इति सूत्रेणाऽग्रेवक्ष्यमाणत्वाद्वर्णगण प्रत्यायकत्वमेवैषां सूत्राणां, न मात्रागणप्रत्यायकत्वम् । वर्णगणाश्च ऋजुवक्रात्मकरेखात्मकत्वेनाष्टौ नियमितास्ते च स्वस्वरूपगताक्षरत्रितयपरिच्छिन्नतया वर्णानां ह्रस्व दीर्घात्मकत्वमाविष्कुर्वाणाः सकलमपि वाङ्मयं निजस्वरूपैः समातन्वानास्तत्र तत्र दरीदृश्यन्ते ॥

ते च लक्ष्यलक्षणसमुद्भासितवर्णाङ्कितसूत्रद्वारा महर्षिणैवोदाह्रियन्तेऽनुपदमेव ॥

धी श्री स्त्री-म् ॥ १ ॥

सूत्रे चास्मिन्वर्णास्त्रयस्ते च गुरवः सन्ति-ते सूत्रस्यान्ते

ऽवतिष्ठमानमन्त्राहितं मकारं संज्ञात्वेन निर्दिशति। एतावता सर्वगुरुर्मगण इति सिद्धम्। स्वरूपतोऽपि तद्रूपं सर्वगुरुत्व-नैवानुमेयम्। तद्यथा [ऽऽऽ] भूमिदैवतोऽयं गणः पद्यादौ प्रयोगाच्छ्रीप्रदश्चेत्यलम् ॥

माङ्गलिक आचार्यो महतश्छन्दःशास्त्रस्य मङ्गलार्थं धीशब्दमादितः प्रयुङ्क्ते। मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाऽध्येतारश्च सि-द्धार्था यथा स्युरिति ॥

मगणस्यापि ग्रन्थादौ विन्यसनं माङ्गलिकमेव। तच्च महर्षिणैव स्वरूपतो निर्दिष्टम्। "क्षेमं सर्वगुरुर्धत्ते मगणो भूमिदैवत" इति नियमात् ॥

एवं सूत्रेणाद्येन मगण स्वरूपमुक्तेदानीं यगण स्वरूपं दर्शयितुं द्वितीयं सूत्रमाह–

वरा सा–य् ॥२॥

अस्मिन्सूत्रेऽपि पूर्वसूत्रवत्त्रय एव वर्णाः। तेषां मध्ये आद्यो लघुः। द्वौ चाग्रिमौ गुरू स्तः। तेषामन्ते विद्यमानो हल् यकारो वर्णत्रयविशिष्टसमुदायस्य यगणेति संज्ञां व्याहरति। एतावता आदिलघुर्यगण इति सिद्धम्। स्वरूप-तोऽपि तद्रूपमादिलघुत्वेनैवानुमेयम्। तद्यथा [ ।ऽऽ ] जलदैवतोऽयं गणः पद्यादौ विन्यसनाद्वृद्धिकर इति ज्ञेयम् ॥

एवं द्वितीयसूत्रेण यगण स्वरूपमुक्त्वा–तृतीयसूत्रेण रगण स्वरूपमाह–

का गुहा-र् ॥ ३ ॥

वर्णत्रयात्मकेऽस्मिन्सूत्रे आद्यन्तभागयोर्गुरुभ्यामव-रुध्यमानो मध्यभागावस्थित एको लघुः प्रतिभाति। तत्रय-घटितसमुदायस्यान्ते वर्तमानो हल् रेफस्तस्य-रगण-इति संज्ञां निर्दिशति। एतावता मध्यलघू रगण इति सिद्धम्। स्वरूपतोपि तद्रूपं मध्यलघुत्वेनैवावलोक्यं, तद्यथा [ऽ।ऽ] वह्निदैवतोऽयं गणः पद्यादौ विन्यसनात्कवेर्नायकस्य वा मरणकर इति प्रत्येतव्यम् ॥

इत्थं तृतीयसूत्रेण रगण स्वरूपमुक्त्वा, चतुर्थसूत्रेण सगण स्वरूपं दर्शयितुमाह-

वसुधा-स् ॥ ४ ॥

सूत्रोक्त [ वसुधेति ] समुदायस्य सत्यपि वर्णत्रया-त्मकत्वे आद्ययोर्लघुत्वं चरमस्य गुरुत्वं च प्रत्यक्षमेव। तस्य समुदायस्यानुपदमेव वेविद्यमानः सकारः सर्वस्य सगणेति संज्ञामाविष्करोति। एतावता अन्त्यगुरुः सगण इति सिद्धम्। स्वरूपतोपि तद्रूपम् अन्त्यगुरुत्वेनैवानु-वीक्ष्यम्, तद्यथा [।।ऽ] वायुदैवतोऽयं गणः पद्यादौ प्रयो-गाद्वायुवद् दूरगमनमेव फलं विधत्ते ॥

एवं चतुर्थसूत्रेण सगण स्वरूपमुक्त्वा, पञ्चमसूत्रेण तगण स्वरूपं दर्शयितुमाह-

सा ते क्व-त् ॥ ५ ॥

सा तेति वर्णयोर्गुरुत्वम् क्वेन्त्यस्य च लघुत्वमनुमोदयता महामहिमपिङ्गलाचार्येण समुदायस्य तेति व्यञ्जनमुखेन

तगणेति संज्ञा समुक्ता अतएवान्तलघुस्तगण इति फलितम्। स्वरूपतोपि तद्रूपं तादृशमेव। तद्यथा [ऽऽ।] व्योमदैवतोऽयं गणः पद्यादौ प्रयोगाच्छून्यमेव फलमातनोति। निष्फलइति बुधैर्बोध्यम्॥

इत्थं पञ्चमसूत्रेण तगणस्वरूपमुक्त्वा, षष्ठेन सूत्रेण जगण स्वरूपमाह—

कदा स-ज् ॥ ६ ॥

वर्णत्रयेणावतिष्ठमानं सूत्रमेतत्। तत्राद्यन्तौ द्वौ वर्णौ लघू-मध्ये तयोर्गुरुश्च। तद्घटितसमुदायस्यान्ते वर्त्तमानो जकारः। स च समुदायस्य जगणेति संज्ञामाह। एतावता मध्यगुरुर्जगण इति फलितम्। स्वरूपतोपि तद्रूपं तादृग्रूपमेव। तद्यथा [।ऽ।] सूर्यदैवतोऽयं गणः पद्यादौ प्रयोगाद्रोगमनुविधत्ते॥

एवं षष्ठसूत्रेण जगण स्वरूपमुक्त्वा, सप्तमसूत्रेण भगण स्वरूपं निदर्शयितुमाह—

किं वद-भ् ॥ ७ ॥

त्र्यक्षरावच्छेदकावच्छिन्नोऽत्र सूत्रे-प्रथमस्य गुरुत्वमितरयोर्लघुत्वं चानुमोद्यते। तयोरन्ते च भः। स च समुदायस्य-भगणेति संज्ञामाह। एतावता-आदिगुरुर्भगण इति सिद्धम्। स्वरूपतोपि तस्य स्वरूपमादिगुर्वेव। तद्यथा [ऽ॥] इन्दुदैवतोऽयं गणः पद्यादौ नियुक्तो निर्मलं यशः प्रसूते। यशसः शुक्लत्वान्निर्म्मलत्वम्॥

एवं सप्तमसूत्रेण भगण स्वरूपमुक्त्वा, साम्प्रतमष्टमसूत्रेण नगण स्वरूपं प्राह—

न हस-न् ॥ ८ ॥

अत्रापि सूत्रे वर्णत्रयमेवास्ति, तदपि लघुतयैवावतिष्ठमानम्। तदन्ते च वर्त्तमानो नकारः समुदायस्य नगण इति संज्ञामाह। एतावता सर्वलघुर्नगण इति सिद्धम्। स्वर्गदैवतोऽयं गणः पद्यादौ प्रयुज्यमानो नितरां सुखमुत्पादयति। स्वरूपमप्यस्य सर्वलघ्वेव [।।।] विन्यस्तं बोध्यम् ॥

एवं सूत्राष्टकेन गणाष्टकं निर्दिश्य,महर्षिः पिङ्गलाचार्यो गुरुलघुपरिज्ञानाय सूत्रान्तराण्यनुपदमेव दर्शयिष्यति ॥

पूर्वोक्त गणाष्टके—म न भ येति—गणचतुष्टयं पद्यादौ प्रयुक्तं सत्कवेर्नायकस्य च शुभमावहति, तदितरमुभयोरनिष्टमावहतीति विवेकः। ईश्वरवर्णने तु नायं विचारः। मित्रामित्रयोगादशुभगणानामपि शुभं फलं भवतीति केचित। वर्णगणाश्चाऽत्र शास्त्रे अष्टावेव। ते च नामतोरूपतश्च प्रागेव निर्दिष्टाः ॥

गृ-लू ॥ ९ ॥

गृ-इति शब्दो लक्षणया ह्रस्वाक्षरबोधनपरः। लकारश्च संज्ञया तमेवार्थमाह। एतावता ह्रस्वमक्षरं लघुसंज्ञकं भवतीति सूत्रार्थः। महर्षिणा पाणिनिनापि [ह्रस्वं लघु] इति सूत्रयता-स्पष्टतयाऽनुमत एवायमर्थः। तदनुसारिभिरन्यैरप्यनुमोदित इति सर्वाभिमतोर्थः ॥

गन्ते ॥ १० ॥

अतिदेशसूत्रमेतत् । गकारश्चाऽत्र सूत्रे हलेव बोध्यः। अन्ते इति पदच्छेदात्। ह्रस्वाक्षरानुवृत्त्यै पूर्वसूत्रमनुवर्त्तते। सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्रेति नियमात् । एतावता अन्ते इत्यस्य पादान्ते इत्यर्थः। सामान्यार्थस्य विशेषानतिदेशात। तेन च पादान्ते वर्तमानस्य ह्रस्वाक्षरस्य गुरुसंज्ञा अतिदिश्यते ॥

ध्रादिपरः ॥ ११ ॥

इदमप्यतिदेशसूत्रम् । ध्र–इति शब्दो लक्षणया संयुक्ताक्षरमात्रबोधनपरः। ध्रआदिर्येषान्ते ध्रादय इति बहुव्रीहिसमासस्यान्यपदार्थप्रधानत्वात्। सूत्रोपात्त आदिशब्दश्च विसर्जनीयादिबोधनपरः । एतावता–संयुक्ता–ऽनुस्वारविसर्गजिह्वामूलीयोपध्मानीयेभ्यः पूर्वस्य लघ्वक्षरस्य गुरुत्वमतिदिश्यते ॥

हे ॥ १२ ॥

विधिसूत्रमेतत् । सूत्रोपात्तोऽयं हे शब्दो लक्षणया द्विमात्रतामुपलक्षयति । एतावता द्विमात्रस्याक्षरस्यानेन गुरुसंज्ञा विधीयते। अनुस्वार विसर्ग जिह्वामूलीयोपध्मानीयानां तु द्विमात्रत्वाद्दीर्घत्वमुत्सर्गसिद्धम् ॥

लौ सः ॥ १३ ॥

अत्र च मण्डूकप्लुतिन्यायेन दशमसूत्रोपलक्षितो गुरुरनुवर्त्तते। स एव गुरुः सूत्रस्थेन स इति प्रथमान्तपदेनोच्यते स च द्वौ लौ लघू कृत्वा बोद्धव्यः । एकस्मिन्गुरौ द्वे मात्रे

भवत इति भावः। मात्रावृत्तपरिशीलनायैतत्कथनम्। "गन्ता द्विवसव" इति सूत्रे मात्राद्वयमेलनादेकगुरुकरणनियमात्॥

ग्लौ ॥ १४ ॥

गश्च लश्च अनयोरितरेतरयोगः ग्लौ=गुरुलघू इत्यर्थः। इतः परमस्मिञ्छास्त्रेऽधिकृतौ वेदितव्यौ। तौ पूर्वोक्तावित्यध्याहार्यम्। अधिकारोयम्। तस्य सावधिकनिरवधिकेति द्वैविध्येन शास्त्रमात्रमेवास्य गमनस्थलं वेदितव्यम्॥

एवं गुरुलघुसंज्ञामुद्देशतो लक्षणतश्च समाख्याय साम्प्रतं साङ्केतिकवर्णव्यवहारनिष्पत्तये दिग्दर्शनद्वारा संज्ञान्तराण्युपलक्षयति—

अष्टौ वसव इति ॥ १५ ॥

अत्र शास्त्रे वसव इति कथनेनाष्टौ बोध्याः। लोकप्रसिद्धयुपलक्षणमेतत् तेनेश्वर पक्ष वन्हि वेद वाण ऋतु ऋषि नन्द ककुब् रुद्राऽऽदित्य विश्वेदेव भुवन तिथि शब्दैरेकादीनां पञ्चदशान्तानां ग्रहणं कर्त्तव्यम्। तदधिकसंख्याङ्केनाय परस्परद्विगुणग्रहणमनुमेयम्। यथात्रैव—"द्वि स्वरा-द्विवसव" इति महर्षिणैव सूत्रद्वारा निदर्शितम्। इति शब्दोऽध्यायसमाप्तिबोधनपरः॥

—*—

| गणनाम | गणस्वरूपम् | गणदेवता | गणफलानि |
|---|---|---|---|
| मगणः | ऽऽऽ | भूमिः | श्रीः |
| यगणः | ।ऽऽ | जलम् | वृद्धिः |
| रगणः | ऽ।ऽ | वन्हिः | मृतिः |
| सगणः | ।।ऽ | वायुः | दूरगमनम् |
| तगणः | ऽऽ। | व्योम | शून्यम् |
| जगणः | ।ऽ। | सूर्यः | रोगः |
| भगणः | ऽ।। | चन्द्रः | यशः |
| नगणः | ।।। | नाकः | सुखम् |

गणनामस्वरूपदेवताफलज्ञापकं यन्त्रमेतत् । अत्र च षट्त्रिंशत्कोष्ठात्मके यन्त्रे सर्वमेतत्क्रमशो बोध्यम् । प्राङ् नाम, ततोरूपं, ततोदेवतानिर्णयः, परतः फलोपगमनं चेति। मित्राऽमित्रप्रकरणमग्रे वक्ष्यते तत्तत्रैव द्रष्टव्यम् ॥

---

इति श्रीमद्वर्तमानकविरत्नाऽखिलानन्दशर्मप्रणीत
वैदिकभाष्योपेते छन्दःसूत्रे
वर्णगणलघुगुरुनियमनं नाम प्रथमोध्यायः
॥ १ ॥

# अथ द्वितीयोऽध्यायः

एवं तत्र भवान्महर्षिः पिङ्गलाचार्यो वर्णगणलघुगुरुप्रत्यायकानि संज्ञासूत्राणि संदर्श्य, साम्प्रतं स्वरव्यञ्जनदग्धाऽदग्धाऽक्षरगणमिश्राऽमिश्रयोगफलप्रतिपत्तये परिभाषाप्रकरणमाह—

संपत्तिरवर्णात् ॥ १ ॥

पद्यादौ प्रथममवर्णप्रयोगात्संपत्तिर्भवति। पद्यादाविरयुपलक्षणं ग्रन्थादावित्यादिबोधनपरम्। यथा मत्कृते श्रीदयानन्दविजयमहाकाव्ये—"अथोत्सुकः सज्जनसिंहवर्मेति"॥

धनलाभइवर्णात् ॥ २ ॥

पद्यादौ ग्रन्थादौ वा इवर्णप्रयोगात्कवेर्धनलाभो भवति। सामान्येन विधानमेतत् ॥

अख्यातिरुकारात् ॥ ३ ॥

पद्यादावुकारप्रयोगात्कवेरख्यातिर्भवति ॥

वपूर्वाद्विद्वेषः ॥ ४ ॥

वकारपूर्वकाद्वर्णप्रयोगाद्विद्वेषउत्पद्यते। यथा—वृषइति। केवलात्तु सौख्यमेवेति भावः ॥

सौख्यमेचाम् ॥ ५ ॥

एषामादौ प्रयोगे कवेः सौख्यलाभो भवति ॥

वर्गान्तवर्ज प्रयोगात् ॥ ६ ॥

ङ ञ ण न मेति शून्यादेषः प्रयोगादिति युक्तोऽर्थः ॥

भरवहलवर्ज च ॥ ७ ॥

भ र व ह ल वर्जितादेव इति पूर्वसूत्रेण सम्बन्धः ॥

दग्धाक्षरवर्जम् ॥ ८ ॥

दग्धाक्षरवर्जमिति स्वरमात्रोपलक्षणम् । न केवलमेषामेव । एषां सर्वत्र सम्भवात् ॥

शेषे यथेष्टलाभः ॥ ९ ॥

दग्धाक्षरेभ्यो भिन्नानामक्षराणां प्रयोगे यथेष्टलाभः संपद्यते । प्रयोक्तुरिति शेषः ॥ दग्धाऽदग्धाऽक्षरभेदप्रतिपत्तये पद्यमुखेन गणनामाह—

कः खो गो घश्च लक्ष्मीं वितरति वियशो ङस्तथा चः सुखं छः । प्रीतिं जोमित्रलाभं भयमरणकरौ झञो टठौ खेददुःखे ॥ डः शोभां ढो विशोभां भ्रमणमथ च णस्तः सुखं थस्तु युद्धम् । दो धः सौख्यं मुदं नः सुखभयमरणक्लेशदुःखं पवर्गः ॥ १ ॥ यो लक्ष्मीं रस्तु दाहव्यसनमथ लवौ शः सुखं षस्तु खेदम् । सः सौख्यं हस्तु दुःखं विलयमपि च लः क्षः समृद्धिं करोति ॥ संयुक्तं चेह न स्यात्सुखभरणपटुर्वर्णविन्यासयोगः । पद्यादौ गद्यवक्रे वचसि च सकले प्राकृतादौ समोयम् ॥ २ ॥

भा म ह प्रणीतमेतत्पद्यद्वयं फलमुखेन दग्धाऽदग्धाऽक्षरभेदमाह—तत्र शुभफलोपधायकानि शुभान्यशुभफलोपधायकान्यशुभानीति विवेकः । स्वराणां फलं सूत्रद्वारा प्रागुक्तमेव । अनुस्वारविसर्गयोस्तु शुभमेव फलं बोध्यम् ॥ लृकारस्य विदेशगमनं धनहानिश्चेति दिक् ॥

एवं स्वरव्यञ्जनप्रयोगफलान्यावर्ण्य, साम्प्रतं सामान्यतया गणप्रयोगफलमाह–

मयभनप्रयोगात्कीर्तिः ॥ १० ॥

मगण–यगण–भगण–नगण प्रयोगात्कीर्त्तिर्भवति ॥ वृद्धियशःस्वर्गाणामपि कीर्त्त्यन्तर्गतत्वान्न पृथगुक्तिः ॥

अनिष्टं शेषे ॥ ११ ॥

रगण–सगण–तगण–जगणाः शेषशब्देनोच्यन्ते । पूर्वापेक्षया शेषशब्दस्येतरव्यावर्त्तकत्वात् । तेषां प्रयोगे कवेरनिष्टं भवतीति भावः ॥

मित्रामित्रयोगात् ॥ १२ ॥

पूर्वोक्तसूत्रयोः प्रतिप्रसवोयम् । गणेषु मित्रामित्र प्रयोगात्फलोत्पत्तिर्भवतीत्यर्थः ॥ आचार्य एव तद्विभागाय द्वे सूत्रे समादिशति–

म्नौ तौ ॥ १३ ॥

मश्च नश्च म्नौ । तावेव मित्रे इति शेषः । गणानां प्रसंगात् । भयौ भृत्यौ । जरावुदासीनौ । नीचौ तसौ ॥

भ्यौ ज्रौ त्सौ योग योगाभ्याम् ॥ १४ ॥

भगण यगण जगण रगण तगण सगणाः परस्परं योगायोगाभ्यां शुभाशुभफलोपधायका भवन्ति । तत्र योगेन शुभमयोगेनाशुभं चेति विवेकः । मित्रयोर्योगे धनम् । मित्र भृत्ययोर्योगे स्थैर्यम् । मित्रोदासीनयोर्योगे शून्यम् । मित्र नीचयोर्योगे कलहः । केवलभृत्ययोर्योगे दूरगमनम् । केवलो दासीनयोर्योगे दारिद्र्यम् । केवलनीचयोर्योगे मरणप्राप्तिः ॥

अयंविचारः केवलं मनुष्योद्देश्यघटितकाव्य एव। यत्र साक्षादीश्वरस्य वर्णनं विधीयते, दिव्यगुणविशिष्टस्य नायकस्य वा, वेदप्रतिपाद्यधर्मस्य, शास्त्रोक्तलक्षणानां वा, तत्र नायं विचारः। यत्र च काव्ये नायकस्य वर्णनं विधीयते-तस्यान्ते तत्काव्याध्ययनफलं पृथङ्निर्देश्यम्। अन्यथा कविर्दोषभाग्भवतीति नियमात्॥

" वर्त्तमानकविरत्ननिर्मिते
वैदिकेऽत्र किल भाष्यविस्तरे।
पारिभाषिकमदोविवेचनं
पूर्तिमाप्तमिति बोध्यमुत्तमैः " ॥

साम्प्रतं वैदिकछन्दोविज्ञानहेतवे गायत्र्यादिछन्दसामार्ष्यादिभेदनिष्पत्तये च, महर्षिः पिङ्गलाचार्यो योगान्तराण्याह–फलमेषामार्ष्यादिसंज्ञाकरणम्। पादनियमनं त्वग्रे वक्ष्यते॥

छन्दः॥ १५॥

अधिकारोयमाशास्त्रपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामस्तत्सर्वं छन्दोवेदितव्यम्॥

गायत्री॥ १६॥

अधिकारोयमाद्वादशसूत्रपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामस्तत्सर्वं छन्दो गायत्रीसंज्ञं बोध्यम्॥

दैव्येकम्॥ १७॥

एकमक्षरमुद्दिश्य प्रयुक्ता गायत्री दैवीति संज्ञां लभते।

अक्षरचतुष्टयात्मके मन्त्रे एकस्यैवाक्षरस्य पादत्वकल्पना-दयं विशेषसंज्ञानियमः ॥

आसुरी पञ्चदश ॥ १८ ॥

पञ्चदशाक्षरपादवती गायत्री आसुरीति संज्ञां लभते। तानि चाक्षराणि ग्लावित्यधिकाराद् गुरुलघुरूपाणि बोध्यानि । षष्ट्यक्षरात्मके मन्त्रे विशेषसंज्ञाकरणाय पादनियमनमेतत् ॥

प्राजापत्याऽष्टौ ॥ १९ ॥

अष्टौ वर्णानुद्दिश्य पादव्यवहारे प्रयुक्ता गायत्री प्राजापत्या समाख्यायते । द्वात्रिंशदक्षरात्मके मन्त्रे पादनियमनाय विशेषसंज्ञाकरणम् ॥

यजुषां षट् ॥ २० ॥

षडक्षराण्युद्दिश्य प्रयुक्तपादकल्पना गायत्री याजुषीति संज्ञां लभते । चतुर्विंशत्यक्षरात्मके मन्त्रे पादव्यवहृत्यै संज्ञान्तरमेतदवसेयम् ॥

साम्नां द्विः ॥ २१ ॥

क्रियाभ्यावृत्तौ द्विरिति शब्दः । द्विः—द्विरावृत्ता षट्संख्या द्वादशेति यावत् । तत्परिमाणघटिता गायत्री साम्नां भवति । अष्टचत्वारिंशदक्षरात्मके मन्त्रे पादव्यवहाराय संज्ञाविशेषः ॥

ऋचां त्रिः ॥ २२ ॥

क्रियाभ्यावृत्तौ त्रिरिति शब्दः । षडित्यस्यानुवृत्तेः । तेन त्रिरावृत्ता षट्संख्या—अष्टादशेति यावत् । तत्परिमाण

घटितान्वर्णानुद्दिश्य क्रियमाणपादव्यवस्थापना गायत्री आर्चीति संज्ञां लभते। द्विसप्तत्यक्षरात्मके मन्त्रे पादकल्पनाय विशेषसंज्ञाकरणमारभ्यते ॥

द्वौ द्वौ साम्नां वर्धेत ॥ २३ ॥

वक्ष्यमाणोष्णिगादिसंज्ञाकल्पनार्थमेतत् । साम्नां पङ्क्तौ या गायत्री सा द्वौ द्वौ संख्याङ्कौ गृहीत्वा वर्धेत। उष्णिगादिसंज्ञाकरणात्प्रागेव नियमोयम् ॥

त्रींस्त्रीनृचाम् ॥ २४ ॥

ऋचां पङ्क्तौ गायत्री त्रींस्त्रीनङ्कान्गृहीत्वा वर्द्धेत ॥

चतुरश्चतुरः प्राजापत्यायाः ॥ २५ ॥

प्राजापत्यायाः पङ्क्तौ गायत्री चतुरश्चतुरोऽङ्कान्गृहीत्वा वर्धेत ॥

एकैकं शेषे ॥ २६ ॥

प्रागुक्तसूत्रत्रितयोक्तसंज्ञाविशेषावशिष्टा या पङ्क्तिः सा शेषशब्देनोच्यते । सा च दैवी याजुषी च। तत्पङ्क्तौ गायत्री एकैकमक्षरं गृहीत्वा वर्द्धेत ॥

जह्यादासुरी ॥ २७ ॥

आसुरी गायत्री स्वपङ्क्तावेकैकमक्षरं जह्यादित्यर्थः। सूत्रपञ्चकमेतदनुपदमेव वक्ष्यमाणसूत्रोक्तसंज्ञाविशेषप्रतिपत्त्यर्थम् ॥

तान्युष्णिगऽनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः ॥ २८ ॥

तानि पूर्वोक्तानि दैवी–आसुरी–प्राजापत्या–याजुषी–साम्नी–आर्ची–ब्राह्मीति छन्दांसि, आर्ष्यादीनि क्रमात

उष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीति संज्ञां लभन्ते। गायत्र्याः परस्तादिति भावः ॥

तिस्रस्तिस्रः सनाम्न्यएकैकाब्राह्मयः ॥ २९ ॥

समानं नाम यासां ताः सनाम्न्यः—एकसंज्ञा इत्यर्थः। तिस्रस्तिस्र इति वीप्सायां द्विरुक्तिः। याजुषीं साम्नीमार्ची च गायत्रीं संख्याङ्कैर्गृहीत्वा एका ब्राह्मी गायत्री भवति। उपरिगतकोष्ठत्रयाङ्कमेलनाद्या संख्या निष्पद्यते सा ब्राह्मया इति भावः। सा च षट्त्रिंशदक्षरात्मिका। शताधिकचतुश्चत्वारिंशदक्षरात्मके मन्त्रे पादनियमनाय विशेषसंज्ञाकरणम्। एवमग्रेपि॥

प्राग्यजुषामार्ष्य इति ॥ ३० ॥

तिस्रस्तिस्र इत्यनुवर्तते। प्राजापत्यामासुरीं दैवीं गायत्रीं संख्याङ्कैर्गृहीत्वा एका आर्षी गायत्री भवतीति सूत्रार्थः। नीचैर्गतकोष्ठत्रयाङ्कमेलनाद्या संख्या निष्पद्यते सा आर्ष्यी इति भावः॥

सा च चतुर्विंशत्यक्षरात्मिका। षण्णवत्यक्षरात्मके मन्त्रे विशेषसंज्ञाकरणं पादनियमनार्थम्॥

यथा गायत्री=आर्षी–दैवी–आसुरी–प्राजापत्या–याजुषी–साम्नी–आर्ची–ब्राह्मीति संज्ञां लभते। तथैवोष्णिगपि। पादाक्षरकल्पनं तु कोष्ठाङ्कैरनुमेयम्॥

तद्यथा। आर्षी उष्णिक्। आर्षी अनुष्टुप्। आर्षी बृहती। आर्षी पङ्क्तिः। आर्षी त्रिष्टुप्। आर्षी जगती॥

दैवी उष्णिक् । दैवी अनुष्टुप् । दैवी बृहती । दैवी पङ्क्तिः । दैवी त्रिष्टुप् । दैवी जगती ॥

आसुरी उष्णिक् । आसुर्यऽनुष्टुप् । आसुरी बृहती । आसुरी पङ्क्तिः । आसुरी त्रिष्टुप् । आसुरी जगती ॥

प्राजापत्या उष्णिक् । प्राजापत्याऽनुष्टुप् । प्राजापत्या बृहती । प्राजापत्या पङ्क्तिः । प्राजापत्या त्रिष्टुप् । प्राजापत्या जगती ॥

याजुषी उष्णिक् । याजुष्यऽनुष्टुप् । याजुषी बृहती । याजुषी पङ्क्तिः । याजुषी त्रिष्टुप् । याजुषी जगती ॥

साम्नी उष्णिक् । साम्न्यऽनुष्टुप् । साम्नी बृहती । साम्नी पङ्क्तिः । साम्नी त्रिष्टुप् । साम्नी जगती ॥

आर्ची उष्णिक् । आर्च्यऽनुष्टुप् । आर्ची बृहती । आर्ची पङ्क्तिः । आर्ची त्रिष्टुप् । आर्ची जगती ॥

ब्राह्मी उष्णिक् । ब्राह्म्यऽनुष्टुप् । ब्राह्मी बृहती । ब्राह्मी पङ्क्तिः । ब्राह्मी त्रिष्टुप् । ब्राह्मी जगती । इति ॥

मन्त्रपादाऽक्षरकल्पनं तु पूर्वोक्तप्रकारेणाऽनुमेयम् । यस्य छन्दसो यत्कोष्ठमुद्दिश्य यदङ्ककल्पना क्रियेत, तस्य तत्कोष्ठाङ्कचातुर्गुण्येन मन्त्राक्षरकल्पना कर्तव्या ॥

आर्षीब्राह्म्योस्तु नीचैरुपरि च कोष्ठत्रयाङ्कमेलनात् सम्पन्नायां पादाक्षरकल्पनायां तच्चतुर्गुणाक्षरकल्पनं मन्त्रे कर्तव्यम् ॥

प्रतिकोष्ठमयमार्षीब्राह्म्योर्नियमः । यदधोगतकोष्ठत्रयाङ्कमेलनमुच्चैर्गतकोष्ठत्रयाङ्कमेलनमिति ॥

साम्प्रतं वैदिकविशेषवृत्त-संज्ञा-पाद-मन्त्राऽक्षरस्पष्ट प्रतिपत्तये कोष्ठस्थापनप्रकारमाह-पूर्वमेकाशति(८१)कोष्ठात्मकमेकं गृहं विधाय, तत्र प्रथमपङ्क्तावार्षीनाम विदध्यात्। एवं सर्वेष्वाद्येषु कोष्ठेषु तत्तन्नामानि विन्यसेत्। तदभिमुखकोष्ठेषु सूत्रोक्तप्रकारैरङ्कन्यासं विदध्यात्। उपरितनेषु छन्दो नामानि विन्यसेत्। यथा-

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | छं० | गा. | उ. | अ. | बृ. | पं. | त्रि. | ज. | अङ्कवृद्धिक्षयौ |
| २ | आ० | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ | वृद्धिः ४ |
| ३ | दै० | १ | २ | ३ | ४ | ५ | ६ | ७ | वृद्धिः १ |
| ४ | आ० | १५ | १४ | १३ | १२ | ११ | १० | ९ | क्षयः १ |
| ५ | प्रा० | ८ | १२ | १६ | २० | २४ | २८ | ३२ | वृद्धिः ४ |
| ६ | या० | ६ | ७ | ८ | ९ | १० | ११ | १२ | वृद्धिः १ |
| ७ | सा० | १२ | १४ | १६ | १८ | २० | २२ | २४ | वृद्धिः २ |
| ८ | आ० | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ | वृद्धिः ३ |
| ९ | ब्रा० | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ | वृद्धिः ६ |
| | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |

८१

एकाशीतिकोष्ठात्मकमेतद्यन्त्रं सर्वमपि प्रागुक्त छन्दोजातं स्पष्टतया निदर्शयति। अन्तिमकोष्ठेषु सूत्रोक्तक्रमेण वर्णानां प्रतिपङ्क्तौ वृद्धिक्षयविज्ञानं पूर्णतया संजायत इति ॥

इति श्रीमद्वर्तमान कविरत्नाऽखिलानन्द शर्म्मप्रणीत
वैदिकभाष्योपेते छन्दःसूत्रे-स्वरव्यञ्जनफल
दग्धाऽदग्धाऽक्षरयोग-गणमित्राऽमित्रभेद-वैदिक
विशेषछन्दोविवेचनं नाम द्वितीयोऽध्यायः ॥२॥

# अथ तृतीयाऽध्यायः

पूर्वस्मिन्नध्याये वैदिकविशेषवृत्तजातमावर्ण्य साम्प्रतं सामान्यतया पादव्यवस्थापूर्वकं वैदिकवृत्तमेव पुनर्वर्णयितुमारभते—

पादः ॥ १ ॥

अधिकारोयम् । आ अध्यायपरिसमाप्तेः । सामान्यतया वैदिकवृत्तमात्रेऽस्य गमनात् ॥

इयादिपूरणः ॥ २ ॥

इयादिभिः पूर्यते यः स इयादिपूरणः । आदिशब्देनोवादयः । इयङुवङोरुपलक्षणमेतत् । यत्र मन्त्रे पादस्याक्षरसंख्या पूर्तिं नैति तत्रेयादिभिः कर्तव्येति सूत्रार्थः । यथा—तत्सवितुर्वरेणियम् । यथा वा—दिवङ्गच्छ सुवः पतेति । अत्र [ वरेण्य ] मिति पठितव्ये [ वरेणिय ] मिति पठनं मन्त्रपादाक्षरपूर्तिप्रतिपत्त्यर्थम् । स्वः पतेत्यादौ सुवइत्यपि पठनं तदर्थकमेव ॥

गायत्र्यावसवः ॥ ३ ॥

वसवइत्यष्टाक्षरोपलक्षणम् । गायत्रीछन्दसः पादो लोकवेदयोरष्टाक्षरो भवतीति सूत्रार्थः । सामान्यतया विधिमुखेन विधानमेतत् । यथा—

" विश्वानि देव सवित- "
" दुरितानि परासुव "
" यद्भद्रं तन्न आसुव " ॥ इति ॥

जगत्या आदित्याः ॥ ४ ॥

आदित्या इति द्वादशाक्षरपादोपलक्षणम् । जगती छन्दसः पादो लोकवेदयोर्द्वादशाक्षरो भवतीति सूत्रार्थः । उदाहरणं वेदेभ्योऽवगन्तव्यम् ॥

विराजो दिशः ॥ ५ ॥

दिश इति दशाक्षरोपलक्षणम् । विराट् छन्दसः पादो दशाक्षरो भवतीत्यर्थः । विराडिति पङ्क्तेर्नामान्तरम् । तत्रायं नियमः । वेदे दशाक्षरपादं छन्दो विराडिति कथ्यते । लोके च पङ्क्तिरिति ॥

त्रिष्टुभो रुद्राः ॥ ६ ॥

रुद्रा इत्येकादशाऽक्षरपादोपलक्षणम् । त्रिष्टुप् छन्दसः पादो लोकवेदयोरेकादशाक्षरो भवतीति योगार्थः । यथा–

"हिरण्यगर्भः समवर्तताग्रे
भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां
कस्मै देवाय हविषा विधेम ॥" इति ॥

गायत्रीत्रिष्टुब्जगतीपङ्क्तिषु सामान्यतया लोकवेदयोरुभयोरपि पादनियमनमेतत् । उष्णिगनुष्टुब्बृहती पादकल्पनं तु पूर्वोक्तचतुष्टयपादमेलनजन्यमेव । न पृथक्तया वेदे व्यवस्थाप्यते । लोके त्वेकैकाक्षरवृद्ध्या नियतत्वमेव ॥

यानीमानि महर्षिणा गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्याख्यानि छन्दांसि लोकोपकाराय निदर्शितानि तानि वेदमूलान्येव । यथा–

"गायत्रीत्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह ।
बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तु त्वा"—इति ॥

अस्मिन्यजुर्वेदान्तर्गते मन्त्रे पूर्वोक्तछन्दसां नामानि स्पष्टतया प्रतीयन्ते । अतएव वेदमूलकमेतच्छास्त्रं वेदाङ्गत्वेन व्यवह्रियते । परम्परासम्बन्धेन वृत्तमूलकत्वात्काव्यशक्तिरपि वेदमूलैव ॥

एकद्वित्रिचतुष्पादुक्तपादम् ॥ ७ ॥

उक्तः पादो यस्य तदुक्तपादम् । पूर्वोक्तलक्षणलक्षितं छन्दः क्वचिदेकपात्क्वचिद्द्विपात्क्वचित्त्रिपात्क्वचिच्चतुष्पाद्भवति । एकविधाः पादा यस्य तदेकपात् । द्विविधाः पादा यस्य तद् द्विपात् । त्रिविधाः पादा यस्य तत्त्रिपात् ।चतुर्विधाः पादा यस्य तच्चतुष्पात् । एतावता पूर्वोक्तनियतपादमिश्रणमायातम् । एकः पादो यस्मिन्निति विग्रहस्तु केवलैकविधपादनियमनान्नाद्रियते—वक्ष्यमाणवैदिकछन्दो विरोधात् ॥

यदेतत्पादनियमनं पूर्वसूत्रेण विहितं तदपि वेदमूलकमेव । परम्परया लौकिकवृत्तपादनियमनमपि तन्मूलकमुत्सर्गसिद्धम् । यथा—

" द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः ।
विच्छन्दा याश्च सच्छन्दाः सूचीभिः शम्यन्तु त्वा"—इति ॥

यजुर्वेदान्तर्गतोयं मन्त्र ऋचां पादव्यवस्थापनमुपदिशति । विच्छन्दा इत्यनेन विविधं विषमं वा छन्द इति

निरुक्तिद्वारा विषमाक्षरपादग्रहणम् । सच्छन्दा इत्यनेन समानं छन्दोयासु जातिषु ताः समानाक्षरपादा जातयो गृह्यन्ते । एवमर्द्धाधिकारो गाथाधिकारो दण्डकाधिकारश्च यावांल्लौकिकवृत्ते दरीदृश्यते सर्वोऽपि वेदमूलक एव। महर्षिभिस्तु केवलं लोकानुग्रहकाङ्क्षया विस्तरेण निदर्शितः। साम्प्रतं प्रकृतमनुस्रियते ॥

आद्यश्चतुष्पादृतुभिः ॥ ८ ॥

षडक्षरोपलक्षितैश्चतुर्भिः पादैः क्वचिद्गायत्री भवति, न सर्वत्र । तस्यास्त्रिपादनियमनात् । सिंहावलोकनन्यायादग्रिमसूत्रात्क्वचिदित्यस्यानुवृत्तेः । ऋतुभिरिति निर्देशोलक्षणया षडर्थबोधनपरः ॥

क्वचित् त्रिपादृषिभिः ॥ ९ ॥

ऋषिभिरिति सप्ताक्षरोपलक्षणम् । सप्ताक्षरोपलक्षितैस्त्रिभिः पादैः क्वचिद्गायत्री भवति। सूत्रे चास्मिन्योगविभाग आद्रियते। तेनाष्टाक्षरपादवती त्रिपाद्गायत्री सुतरामायाति॥

सा पादनिचृत् ॥ १० ॥ (निचृद्

सेति प्रसिद्धार्थकम् । सा प्रसिद्धा योगविभागनिर्द्दिष्टा चतुर्विंशत्यक्षरा त्रिपदा गायत्री पादनिचृत्संज्ञां लभते । गायत्र्याः संज्ञान्तरमेतत् ॥

षट्कसप्तकयोर्मध्येऽष्टावतिपादनिचृत् ॥११॥ पादनिचृत

गायत्र्यधिकाराऽपवादप्रकरणमेतत्। त्रिपादित्युवर्तते। आद्यस्य पादस्य षडक्षरत्वे द्वितीयस्याष्टाक्षरत्वे तृतीयस्य च सप्ताक्षरत्वे सैव गायत्री अतिपादनिचृत्संज्ञां लभते ॥

द्वौ नवकौ षट्कश्च सा नागी ॥ १२ ॥

त्रिपात्सैव गायत्री-प्रथमद्वितीयपादयोर्नवाक्षरत्वे तृतीयस्य षडक्षरत्वे च-नागीति संज्ञां लभते ॥

विपरीता वाराही ॥ १३ ॥

पूर्वोक्ता नागी गायत्री पादैर्व्यत्ययमागता चेद्वाराही-त्याख्यां लभते । पूर्वसूत्रापेक्षया तृतीयस्याद्यत्वं व्यत्ययः । व्यत्ययमूलकमेव नामान्तरम् ॥

षट्कसप्तकाष्टकैर्वर्धमाना ॥ १४ ॥

सैव त्रिपाद्गायत्री-क्रमेण सूत्रोक्तसंख्याङ्कपादवती चेद्वर्धमानेति संज्ञां लभते ॥

विपरीता प्रतिष्ठा ॥ १५ ॥

सैव त्रिपाद्गायत्री-वर्धमानालक्षणाद्भिन्ना चेत्प्रतिष्ठेति संज्ञां लभते । अष्टकसप्तकषट्कत्वं व्यत्ययः ॥

तृतीयं द्विपाज्जागतगायत्राभ्याम् ॥ १६ ॥

तृतीयमिति शब्दस्तृतीयाध्यायबोधनपरः । तृतीयमध्यायमुद्दिश्य पठितेषु सूत्रेषु "विराजोदिश" इति पञ्चमं सूत्रम् । तन्मूलिकेयं विराट् संज्ञा । वर्तमानसूत्रेऽपठितत्वात् । द्विपादिति कथनं त्रिपादित्यस्य निवृत्त्यर्थम् । उत्तरसूत्रे पुनर्ग्रहणात् । अर्धमन्त्रोपलक्षणार्थं पादद्वयकथनम् । उत्तरार्धस्यापि तादृशलक्षणवत्त्वात् । प्रथमपादस्य द्वादशाक्षरात्मकत्वे-द्वितीयस्य चाष्टाक्षरात्मकत्वे-विराट्गायत्री भवतीति सूत्रार्थः । एवं तृतीयचतुर्थपादयोरपि ज्ञेयम् ॥

त्रिपात्त्रैष्टुभैः ॥ १७ ॥

एकादशाक्षरैस्त्रिभिः पादैस्त्रिपाद्विराट् गायत्री भवती-त्यर्थः । समाप्तो गायत्र्यधिकारः ॥

---*---

अतः परमुष्णिगधिकारः प्रस्तूयते, तमेवाह–

उष्णिग्गायत्रौ जागतश्च ॥ १८ ॥

यत्र प्रथमद्वितीयपादावष्टाक्षरौ स्यातां, तृतीयश्च द्वादशाक्षरः स्यात्तदुष्णिक् छन्दो भवति ॥

ककुम्मध्ये चेदन्त्यः ॥ १९ ॥

अन्त्य इति पूर्वसूत्रापेक्षया प्राह । अन्तयोद्वादशाक्षरः पादो यदि मध्ये भवेत्प्रथमतृतीयौ च गायत्रौ स्यातां तदा ककुबुष्णिक् छन्दो भवति ॥

पुरउष्णिक्पुरतः ॥ २० ॥

द्वादशाक्षरः पादः पूर्वः स्यादपरौ च द्वितीयतृतीयाव-ष्टाक्षरौ स्यातां तदा सा उष्णिक्–पुरउष्णिगित्यभिधीयते ॥

परोष्णिक्परः ॥ २१ ॥

उष्णिगधिकारसूत्रेणैव सिद्धे नियमार्थं वचनम् । द्वादशा-क्षरपादस्य तृतीयत्वे प्रथमद्वितीययोश्चाष्टाक्षरत्वे सा उष्णिक् परोष्णिग्भवति ॥

चतुष्पादृषिभिः ॥ २२ ॥

सप्ताक्षरोपलक्षितैश्चतुर्भिः पादैः क्वचिदुष्णिगुपलभ्यते । समाप्त उष्णिगऽधिकारः ॥

---*---

इतः परमनुष्टुबधिकारः प्रारभ्यते, तमेवाह–

अनुष्टुब्गायत्रैः ॥ २३ ॥

पूर्वसूत्राच्चतुष्पादित्यनुवर्त्तते । अष्टाक्षरोपलक्षितैश्चतुर्भिः पादैरनुष्टुप् छन्दो भवति ॥

त्रिपात्क्वचिज्जागताभ्यां च ॥ २४ ॥

अनुष्टुबित्यनुवर्तते। गायत्रग्रहणं च। प्रथमपादस्याष्टाक्षरत्वे द्वितीयतृतीययोश्च द्वादशाक्षरत्वे क्वचित् त्रिपादनुष्टुब्भवति । न सर्वत्रेति शेषः ॥

मध्येऽन्ते च ॥ २५ ॥

द्वादशाक्षरयोः प्रथमतृतीयपादयोर्मध्ये यदाष्टाक्षरो द्वितीयः पादः स्यात्तदा त्रिपादनुष्टुब्भवति ॥ अथ च द्वादशाक्षरयोः प्रथमद्वितीयपादयोरन्ते यदि तृतीयः पादोऽष्टाक्षरः स्यात्तदापि त्रिपादनुष्टुबेव भवति। निवृत्तोऽनुष्टुबधिकारः ॥

——*——

साम्प्रतं बृहत्यधिकारः प्रस्तूयते, तमेवाह–

बृहती जागतस्त्रयश्च गायत्राः ॥ २६ ॥

प्रथमपादस्य द्वादशाक्षरत्वे द्वितीयतृतीयतुर्याणामष्टाऽक्षरत्वे सति बृहती छन्दो भवति ॥

पथ्या पूर्वश्चेत्तृतीयः ॥ २७ ॥

पूर्वश्चेद् द्वादशाक्षरः पादस्तृतीयः स्यात्प्रथमद्वितीय तुरीया अष्टाक्षराः स्युस्तदा पथ्या बृहती छन्दोभवति ॥

न्यङ्कुसारिणी द्वितीयः ॥ २८ ॥

द्वितीयः पादो द्वादशाऽक्षरश्चेत्प्रथमतृतीयतुर्या अष्टाक्षराः स्युस्तदा न्यङ्कुसारिणीतिसमाख्यं छन्दोभवति॥

स्कन्धोग्रीवी क्रौष्टुकेः ॥ २९ ॥

पूर्वलक्षणलक्षिता न्यङ्कुसारिणी क्रौष्टुकेराचार्यस्य मते स्कन्धोग्रीवीति संज्ञां लभते ॥

उरोबृहती यास्कस्य ॥ ३० ॥

सैव पूर्वोक्ता न्यङ्कुसारिणी यास्कस्याचार्यस्य मते उरोबृहतीति संज्ञां लभते। यास्को महर्षिर्निरुक्तप्रणेता तद्ग्रहणं पूजार्थम् ॥

उपरिष्टाद्बृहत्यन्ते ॥ ३१ ॥

प्रथमद्वितीयतृतीयपादानामष्टाक्षरात्मकत्वे चतुर्थस्य च द्वादशाक्षरत्वे सति उपरिष्टाद्बृहती छन्दो भवति ॥

पुरस्ताद्बृहती पुरः ॥ ३२ ॥

बृहत्यधिकारसूत्रेणैव सिद्धे नियमार्थमेतत्। द्वादशाक्षरपादस्य प्रथमत्वे ततः परेषां त्रयाणामष्टाक्षरत्वे सति पुरस्ताद्बृहती छन्दोभवति ॥

क्वचिन्नवकाश्चत्वारः ॥ ३३ ॥

नवाक्षरोपलक्षिताश्चतुरोऽपि पादाः क्वचित्क्वचिद्वेदे समुपलभ्यन्ते, तेऽपि बृहतीछन्दस एव बोध्याः ॥

वैराजौ गायत्रौ च ॥ ३४ ॥

यत्र प्रथमद्वितीयौ पादौ दशाक्षरौ स्यातां तृतीयचतुर्थौ चाष्टाक्षरौ, सापि बृहत्येव भवति ॥

त्रिभिर्जागतैर्महाबृहती ॥ ३५ ॥

द्वादशाक्षरोपलक्षितैस्त्रिभिः पादैर्महाबृहतीसंज्ञकं छन्दो भवति। तच्च क्वचिदेव, न सर्वत्र ॥

सतोबृहती ताण्डिनः ॥ ३६ ॥

पूर्वलक्षणलक्षिता महाबृहती ताण्डिनस्याचार्यस्य मते सतोबृहतीति संज्ञां लभते। अवसितिमाप्तो बृहत्यधिकारः॥

—*—

अस्मात्परं पङ्क्त्यऽधिकारः समारभ्यते, तमेवाह–

पङ्क्तिर्जागतौ गायत्रौ च ॥ ३७ ॥

यत्र प्रथमद्वितीयौ पादौ द्वादशाक्षरौ स्यातां तृतीय-चतुर्थौ चाष्टाक्षरौ, तत्पङ्क्तिश्छन्दो भवति ॥

पूर्वौ चेदयुजौ सतःपङ्क्तिः ॥ ३८ ॥

पूर्वाविति कथनं पूर्वसूत्रापेक्षम्। अयजाविति प्रथम तृतीयपादयोर्ग्रहणम्। तयोर्द्वादशाक्षरत्वे द्वितीयचतुर्थयो-श्चाष्टाक्षरत्वे सतःपङ्क्तिश्छन्दो भवति ॥

विपरीतौ च ॥ ३९ ॥

वैपरीत्यमिह पूर्वयोगापेक्षम्। तच्च अयुजोरष्टाक्षरत्वं युजोर्द्वादशाक्षरात्मकत्वम्। यत्र प्रथमतृतीयौ पादावष्टाक्षरौ स्यातां द्वितीयचतुर्थौ चद्वादशाक्षरौ तदापि सतःपङ्क्तिरेव॥

आस्तारपङ्क्तिः परतः ॥ ४० ॥

यदा प्रथमद्वितीयपादवाष्टाक्षरौ स्यातां तृतीयचतुर्थौ च द्वादशाक्षरौ तदा आस्तारपङ्क्तिश्छन्दोभवति ॥

प्रस्तारपङ्क्तिः पुरतः ॥ ४१ ॥

यदा प्रथमद्वितीयपादौ द्वादशाक्षरौ स्यातां तृतीय चतुर्थौ चाष्टाक्षरौ तदा प्रस्तारपङ्क्तिश्छन्दोभवति ॥

विष्टारपङ्क्तिरन्तः ॥ ४२ ॥

यदा द्वादशाक्षरौ पादौ मध्ये स्यातामाद्यन्तयोश्चाष्टाक्षरौ तदा विष्टारपङ्क्तिश्छन्दोभवति ॥

संस्तारपङ्क्तिर्बहिः ॥ ४३ ॥

यदा प्रथमचतुर्थपादौ द्वादशाक्षरौ स्यातां द्वितीय तृतीयौ चाष्टाक्षरौ तदा संस्तारपङ्क्तिश्छन्दो भवति ॥

अक्षरपङ्क्तिः पञ्चकाश्चत्वारः ॥ ४४ ॥

उत्तरसूत्रादिह अल्पश इत्यपकृष्यते । पञ्चाक्षरोपलक्षितैश्चतुर्भिः पादैरक्षरपङ्क्तिश्छन्दो भवति। पङ्क्तेश्चत्वारिंशदक्षरात्मकत्वे विंशत्यक्षरात्मकत्वं विशेषप्रतिपत्त्यर्थम् ॥

द्वावप्यल्पशः ॥ ४५ ॥

पञ्चका इत्यनुवर्त्तते। पञ्चाक्षरोपलक्षितौ द्वावपि पादौ चेद्भवेतां तदा अल्पशःपङ्क्तिश्छन्दोभवति । कुत्रचिदेवेदं, न सर्वत्र ॥

पदपङ्क्तिः पञ्च ॥ ४६ ॥

पञ्चाक्षरोपलक्षितैः पञ्चभिः पादैः पदपङ्क्तिश्छन्दोभवति ॥

चतुष्कषट्कौ त्रयश्च ॥ ४७ ॥

प्रथमपादस्य चतुरक्षरत्वे द्वितीयस्य षडक्षरत्वे तृतीय चतुर्थपञ्चमानां च पञ्चाक्षरत्वे पङ्क्तिरेव छन्दोभवति ॥

पथ्या पञ्चभिर्गायत्रैः ॥ ४८ ॥

अष्टाक्षरोपलक्षितैः पञ्चभिः पादैः पथ्यापङ्क्तिश्छन्दो भवति । समाप्तिमितः पङ्क्त्यधिकारः ॥

इतः परं त्रिष्टुब्जगत्योरधिकारः प्रस्तूयते, तमेवाह–

जगती षड्भिः ॥ ४९ ॥

पूर्वसूत्राद्गायत्रैरित्यनुवर्त्तते । अष्टाक्षरोपलक्षितैः षड्भिः पादैर्जगतीछन्दो निष्पद्यते ॥

एकेन त्रिष्टुब्ज्योतिष्मती ॥ ५० ॥

प्रथमपादस्यैकादशाक्षरत्वे, ततः परं चतुर्णामष्टाक्षरत्वे सति पञ्चपात् त्रिष्टुब्ज्योतिष्मती छन्दोभवति ॥

तथा जगती ॥ ५१ ॥

प्रथमपादस्य द्वादशाक्षरत्वे ततः परं चतुर्णामष्टाक्षरत्वे सति, पञ्चपाज्जगती ज्योतिष्मती छन्दोभवति ॥

पुरस्ताज्ज्योतिः प्रथमेन ॥ ५२ ॥

उभयार्थकं सूत्रमेतत् । पूर्वसूत्राज्जगती इत्यनुवर्त्तते । प्रथमपादस्यैकादशाक्षरत्वे,ततः परं चतुर्णामष्टाक्षरत्वे सति पञ्चपात्पुरस्ताज्ज्योतिर्नाम त्रिष्टुब्भवति ॥ किं च–आद्यपादस्य द्वादशाक्षरत्वे ततः परं चतुर्णामष्टाक्षरत्वे सति, पुरस्ताज्ज्योतिर्नाम जगती भवति ॥

मध्येज्योतिर्मध्यमेन ॥ ५३ ॥

यदा प्रथमद्वितीयपादावष्टाक्षरौ स्यातां तृतीयश्चैकादशाक्षरश्चतुर्थपञ्चमौ चाष्टाक्षरावेव, तदा मध्येज्योतिर्नाम त्रिष्टुब्भवति । किं च–प्रथमद्वितीयपादयोरष्टाक्षरत्वे तृतीयस्य द्वादशाक्षरत्वे, चतुर्थपञ्चमयोः पुनरष्टाक्षरत्वे सति, मध्येज्योतिर्नाम जगती भवति ॥

उपरिष्टाज्ज्योतिरन्तेन ॥ ५४ ॥

आद्यानां चतुर्णामष्टाक्षरत्वे पञ्चमस्य चैकादशाक्षरत्वे सति उपरिष्टाज्ज्योतिर्नाम त्रिष्टुब्भवति । किन्तु—चतुर्णामेवाद्यानामष्टाक्षरत्वे, पञ्चमस्य द्वादशाक्षरत्वे च उपरिष्टाज्ज्योतिर्नाम जगती भवति ॥

एकस्मिन् पञ्चके छन्दः शङ्कुमती ॥ ५५ ॥

प्रथमपादस्य पञ्चाक्षरत्वे ततः परेषां चतुर्णां षडक्षरत्वे सति छन्दोमात्रं शङ्कुमतीसंज्ञां लभते । प्रकृते छन्दो ग्रहणे पुनश्छन्दोग्रहणं सामान्यतया ग्रहणार्थम् ॥

षट्के ककुम्मती ॥ ५६ ॥

प्रथमपादस्य षडक्षरात्मकत्वे ततः परेषां चतुर्णां पञ्चाक्षरत्वे सति छन्दोमात्रं ककुम्मतीसंज्ञां लभते ॥

त्रिपादणिष्ठमध्या पिपीलिकमध्या ॥ ५७ ॥

अतिशयेन अणु—अणिष्ठम् । अणिष्ठं मध्यं यस्याः सा अणिष्ठमध्या । प्रथमतृतीयपादावष्टाक्षरौ यदा स्यातां द्वितीयश्च त्र्यक्षरः स्यात्तदा पिपीलिकमध्या गायत्री भवति । यत्किञ्चिल्लघुमध्यपादं त्रिपाच्छन्दस्तत्सर्वं पिपीलिकमध्यं प्रोच्यते ॥

विपरीता यवमध्या ॥ ५८ ॥

प्रथमतृतीयपादयोस्त्र्यक्षरत्वे द्वितीयस्य चाष्टाक्षरत्वे सति यवमध्या गायत्री भवति । सर्वमपि त्रिपादच्छन्दो बह्वक्षरमध्यपादमिमामाख्यां लभते ॥

ऊनाधिकेनैकेन निचृद्भुरिजौ ॥५९॥

स्वस्वलक्षणलक्षितं सर्वमपि छन्दः एकेनाक्षरेण हीनं सत् निवृत्संज्ञां लभते। अधिकेन च भुरिक् संज्ञां लभते॥

द्वाभ्यां विराट्स्वराजौ ॥ ६०॥

स्वस्वलक्षणलक्षितं सर्वमपि छन्दः द्वाभ्यामक्षराभ्यां हीनं सत् विराट्संज्ञां लभते। अधिकं सत् स्वराट्संज्ञां लभते॥

आदितः संदिग्धे ॥ ६१ ॥

संदिग्धे छन्दसि प्रथमपादोपलक्षितमेव छन्दः सर्वपादेषु बोध्यम्। यदि प्रथमो गायत्रस्तदाऽसौ गायत्री। यदौष्णिहस्तदोष्णिक्। यदाऽनुष्टुभस्तदानुष्टुप्॥

देवतादितश्च ॥ ६२ ॥

द्वितीयमपि निर्णयनिमित्तमाह–संदिग्धे छन्दसि देवतानिर्णयेन छन्दोनिर्णयः कर्तव्यः॥ ता एवाह–

अग्निः सविता सोमो बृहस्पति-<br>र्वरुण इन्द्रो विश्वेदेवाः ॥ ६३ ॥

गायत्र्यादीनां जगत्यन्तानां यथासंख्यमेता देवता बोध्याः–आग्नेयं गायत्रम्। सावित्रमौष्णिहम्। सौम्यमानुष्टुभम्। बार्हस्पत्यं बार्हतम्। वारुणं पाङ्क्तम्। ऐन्द्रं त्रैष्टुभम्। जागतं वैश्वदेव्यम्॥ सर्वेषु मन्त्रेषु मन्त्रोक्ता देवता ज्ञेया। देवता च छन्दोविज्ञापिकेति भावार्थः॥

स्वराः षड्जादयः ॥ ६४ ॥

गायत्र्यादिषु क्रमेण षड्ज–ऋषभ–गान्धार-मध्यम-पञ्चम-धैवत-निषादाः स्वरा बोध्याः। तत्र षड्जस्वरा गायत्री।

ऋषभस्वरा उष्णिक्। गान्धारस्वरा अनुष्टुप्। मध्यमस्वरा बृहती। पञ्चमस्वरा पङ्क्तिः। धैवतस्वरा त्रिष्टुप्। निषाद स्वरा जगती। एषव्यवस्थाक्रमः ॥

सितसारङ्गपिशङ्गकृष्णनीललोहितगौरावर्णाः ॥ ६५ ॥

गायत्र्यादिषु यथासंख्यं बोध्या इति वाक्यशेषः ॥ तत्र सिता गायत्री। सारङ्गः कपिशस्तद्वर्णा–उष्णिक्। पिशङ्गः पीतस्तद्वर्णाऽनुष्टुप्। कृष्णवर्णा बृहती। नीलवर्णा पङ्क्तिः। रक्तवर्णा त्रिष्टुप्। गौरवर्णा जगती। एषविवेकः ॥

अग्निवेश्यकाश्यपगौतमाङ्गिरसभार्गव
कौशिकवासिष्ठानि गोत्राणि ॥६६॥

गायत्र्यादीनां जगतीपर्यन्तानां यथासंख्यं सूत्रोक्तानि गोत्राणि बोध्यानि। सूत्रस्यातिविस्पष्टत्वान्न विवेचनानुयोगः। गोत्राणाम् ऋषिभ्यः प्रचलितत्वान्न तेषां पृथगनुवचनम्। एभिरेव सप्तर्षिभिर्गायत्र्यादीनि छन्दांसि प्रकाश्य लोकोपकाराय निदर्शितानीति भावः ॥

—*—

| १ | छन्दः | गायत्री | उष्णिक् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|---|
| १ | देवता | अग्निः | सविता | सोमः | बृह० | वरुणः | इन्द्रः | विश्वे० |
| १ | स्वरः | षड्जः | ऋषभः | गान्धारः | मध्यमः | पञ्चमः | धैवतः | निषादः |
| १ | वर्णः | शुक्लः | कपिशः | पीतः | कृष्णः | नीलः | रक्तः | गौरः |
| १ | ऋषिः | अग्निवेश्यः | काश्यपः | गौतमः | आङ्गिरसः | भार्गवः | कौशिकः | वासिष्ठः |

देवतास्वरवर्णऋषिज्ञापकं यन्त्रमेतत्। अत्र च क्रमशः सर्वमपि यथायथं विवेचनीयम् ॥

इति श्रीमद्वर्त्तमानकविरत्नाखिलानन्दशर्म
प्रणीतवैदिकभाष्योपेते छन्दःसूत्रे
वैदिकछन्दोविवेचनं नाम
तृतीयोऽध्यायः ॥ ३ ॥

# अथ चतुर्थोऽध्यायः

इत्थं तत्र भवान्पिङ्गलाचार्यो महर्षिर्वैदिकच्छन्दोजातं यथायथं निर्दिश्येदानीं लौकिकवृत्तपरिज्ञानाय वर्णनियमनपादव्यवस्थासंज्ञानिर्देशपुरःसरं गणमात्राछन्दसोर्निर्वचनाय चतुर्थमध्यायमारभते—

चतुःशतमुत्कृतिः ॥ १ ॥

चतुरधिकं शतं चतुःशतम् । यत्र चतुरधिकानि शत संख्याकान्यक्षराणि पादचतुष्टये लभ्यन्ते तदुत्कृतिसंज्ञकं छन्दो भवति। एकाक्षरात्पादादारभ्य षड्विंशत्यक्षरात्मकपादपर्यन्तं वृद्धिनियमात्। षड्विंशत्यक्षरात्मकपादसङ्कलितस्य पद्यस्य पादचतुष्टयाक्षरमेलने सुतरां सूत्रोक्ता संख्या निष्पद्यते । सा चाग्रे स्वयमेव संशयानुन्मूलयन्ती प्रव्यक्ता भविष्यति ॥

चतुरश्चतुरस्त्यजेदुत्कृतेः ॥ २ ॥

उत्कृतेरारभ्य चतुरश्चतुरः संख्याविशेषानितरच्छन्दःसु त्यजेच्चतुरक्षरं यावत् । केष्वित्यपेक्षायामाह—

तान्यभिसंव्याप्रेभ्यः कृतिः ॥ ३ ॥

तानि चतुर्भिरक्षरैर्न्यूनान्युत्कृतेरवराणि वृत्तानि [अभि-सं-वि-आङ्-प्र] एभ्य उपसर्गेभ्यः पराणि कृतिशब्देन साकं योजनीयानि ॥

यथा अभेर्योगादभिकृतिः शताक्षरा। समोयोगात्संकृतिः षण्णवत्यक्षरा। वेर्योगाद्विकृतिर्द्विनवत्यक्षरा। आङो योगादाकृतिरष्टाशीत्यक्षरा। प्रेत्युपसर्गयोगात्प्रकृतिश्चतुरशीत्यक्षरेति समस्तोभावः॥

प्रकृत्या च॥ ४॥

उपसर्गरहितः केवलः कृतिशब्दः प्रकृत्या स्वरूपेणैवावतिष्ठते। तेनाशीत्यक्षरात्मकं कृतिसंज्ञकं छन्दो भवतीत्यायातम्॥

धृत्यष्टिशक्करीजगत्यः॥ ५॥

कृतेरधस्तात् धृतिः अष्टिः शक्करी जगती, एते शब्दाः क्रमेण व्यवस्थापनीयाः॥ पुनः किं कार्यमित्याह—

पृथक्पृथक्पूर्वतएतान्येवैषाम्॥ ६॥

एषां धृत्यादीनां पूर्वतः पृथक्पृथगेतान्येव धृत्यष्टिशक्करीजगत्याख्यानि शब्दरूपाणि संयोजनीयानि। यथा धृतेः पुरस्ताद्धृतिः। अष्टेः पुरस्तादष्टिः। शक्कर्याः पुरस्ताच्छक्करी। जगत्याः पूर्वं जगती। एवं सूत्रद्वयेन प्रकारमुक्त्वा फलनिष्पत्त्यर्थमाह—

द्वितीयं द्वितीयमतितः॥ ७॥

पूर्वोक्तप्रकारनिष्पत्त्या द्विरावृत्तं शब्दरूपं पूर्वरूपेण परित्यज्य द्वितीयं २ शब्दरूपमत्युपसर्गात्परतः प्रयोज्यम्। पूर्वं च स्वरूपेणैवावस्थाप्यम्। तद्यथा—षट्सप्तत्यक्षरा अतिधृतिः। द्विसप्तत्यक्षरा धृतिः। एवमष्टषष्ट्यक्षरा अत्यष्टिः। चतुःषष्ट्यक्षरा अष्टिः। षष्ट्यक्षराअतिशक्करी। षट्पञ्चा-

शदक्षरा शक्करी । द्विपञ्चाशदक्षरा अतिजगती । अष्टचत्वारिंशदक्षरा जगती इति ॥

आत्रैष्टुभाच्च पदार्थम् ॥ ८ ॥

गायत्र्यादित्रिष्टुप्पर्यन्तं पदार्धं छन्दो वैदिकप्रकरणे व्याख्यातं लौकिकप्रकरणेपि तत्तथैव द्रष्टव्यम् । यथा चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । चत्वारिंशदक्षरा पङ्क्तिः । षट्त्रिंशदक्षरा बृहती । द्वात्रिंशदक्षराऽनुष्टुप् । अष्टाविंशत्यक्षरोष्णिक् । चतुर्विंशत्यक्षरा गायत्रीति ॥

सुप्रतिष्ठाप्रतिष्ठामध्यात्युक्तोक्ताश्च ॥ ९ ॥

संज्ञाश्छन्दसाम्बोध्या इति वाक्यशेषः । लौकिकप्रस्तावमधिकृत्यैतत् । तेन विंशत्यक्षरा सुप्रतिष्ठा । षोडशाक्षरा प्रतिष्ठा । द्वादशाक्षरा मध्या । अष्टाक्षरा अत्युक्ता । चतुरक्षरा उक्तेति । नातः परं ह्रासः । द्वितीयसूत्रे एतत्पर्यन्तं नियमात् । वर्णवृत्तमधिकृत्यैतत्संज्ञाकरणम् । तत्रैवाक्षरह्रासविधानात् । गणमात्राछन्दसोस्तु प्रतिसूत्रं संज्ञानिर्देशात् । एतत्सर्वमनुपदमेव स्फुटीभविष्यति ॥

अत्र लौकिकम् ॥ १० ॥

अधिकारोयमाशास्त्रपरिसमाप्तेः । अस्मात्पूर्वेषामिदानीं लौकिकाधिकाराद्वैदिकत्वमुत्सर्गसिद्धम् । इतः प्रभृति चूलिकान्तानामार्यादीनां केवलं लौकिकत्वम् । ततोग्रे च समान्यादीनामुत्कृत्यन्तानां लौकिकत्वं वैदिकत्वं चेत्युभयमपि बोध्यम् । उभयथा संज्ञाकरणात् ॥

## पादश्चतुर्थभागः ॥ ११ ॥

पूर्वोक्तच्छन्दोजातस्य नियताक्षरगणनया तदनुकूलश्चतुर्थोभागः पाद इति कथ्यते । यथा—एकाक्षर उक्तायाः । द्व्यक्षरोऽत्युक्तायाः । त्र्यक्षरोमध्यायाः । चतुरक्षरः प्रतिष्ठायाः । पञ्चाक्षरः सुप्रतिष्ठायाः । एवमेकैकाक्षरवृद्ध्याऽग्रेप्यूह्यम् । समवृत्तविषयकमेतत्पादकल्पनम् । अर्द्धसमविषमयोस्तत्र तत्र नियमनात् । गणमात्राछन्दसोस्तु यतिपदनियमोग्रे वक्ष्यतएव । स चानुपदमायात्येव ॥

## यथावृत्तसमाप्तिर्वा ॥ १२ ॥

व्यवस्थितविभाषेयम् । विषमवृत्तेषूद्गतादिषु चतुर्थभागातिक्रमेणापि पादव्यवस्थादर्शनात् । यस्य वृत्तस्य यादृशैः पादैः न्यूनाक्षरैरधिकाक्षरैर्वा विश्रामपरिसमाप्तिर्दृश्येत तस्य तादृशाएव पादाग्रहीतव्या इति सूत्रार्थः । अनियतपादव्यवस्थार्थमेतत् । छन्दश्चात्र लौकिकं त्रिविधम् । गणमात्राक्षरभेदात् । तत्र किमपि गणच्छन्दः । किमपि मात्राच्छन्दः । किमप्यक्षरच्छन्दः । आर्यामारभ्योद्गीतिं यावद् गणच्छन्दः तत्र गणनियमनात् । वक्ष्यति चानुपदमेव [लः समुद्रागण इति]ततोग्रे वैतालीयादाचूलिकान्तं मात्राच्छन्दः तत्र मात्रानियमनात् । ततः परं समानीप्रभृत्युत्कृतिपर्यन्तमक्षरच्छन्द इति विवेकः ॥

एवं वर्णवृत्तसंज्ञानिर्द्देशपुरःसरं तद्विषये पादव्यवस्थामपि निर्णीय साम्प्रतं गणवृत्तप्रतिपत्तये सर्वतः पूर्वं गणसंज्ञामाह—

ङः समुद्रागणः ॥ १३ ॥

लइत्येकमात्रोपलक्षणम् । समुद्रा इति चतुःसंख्योपलक्षणार्थम्। तेन लघुरूपचतुर्मात्राणामेकोगणइति सिद्धम्। स च किंविधइति निदर्शयितुमाह—

गौगन्तमध्यादिर्लश्च ॥ १४ ॥

स हि गणः कदाचिद्गुरुरूपेणावतिष्ठते। वक्रात्मकैकरेखाविन्यसनङ्कुरोश्चिन्हम् । तद्युगलेन मात्राचतुष्टयनिर्वाहात्। कदाचिन्मध्यगुरुत्वेन। कदाचिदन्तगुरुत्वेन। कदाचिदादिगुरुत्वेन। कदापि लघुरूपचतुर्मात्रत्वेनैव । एवं पञ्चैव गणाः संपद्यन्ते । ते च [ म–स–ज–भ–नाः ] एव। स्वरूपाण्यपि तेषामेवंविधानि भवन्ति । तानि यथा–[ SS, IIS, ISI, SII, IIII ]

एवं सरूपेषु गणेषु निर्दिष्टेषु गणवृत्तेषु मुख्यमार्यावृत्तं वर्णयितुं साम्प्रतं तल्लक्षणमाह–

स्वराअर्द्धञ्चार्य्यार्द्धम् ॥ १५ ॥

गण इति वर्तते। स्वराइति सप्तसंख्योपलक्षणम् । यत्र प्रस्तारे कृते सति सप्त गणाः पूर्णाः परतश्च गणस्यार्द्धं निष्पद्यते तदार्यार्द्धम् । द्वितीयमप्यर्धन्तादृशमेव। अर्द्धशब्दस्य समप्रविभागार्थकत्वात् ॥

एतावता सार्द्धसप्तगणाः आर्यार्द्धे भवन्तीत्यायातम् । पूर्णायां पञ्चदशगणाउत्सर्गसिद्धाः । ते च पूर्वोक्तगणानामभ्यासादेव। एतावता आर्यायानियतगणत्वमसिद्धम् अर्द्धस्य

लक्षणादवान्तरपादव्यवस्थानिवृत्तिः सुतरामाचार्येण निदर्शितास्ति ॥ अस्याश्च गुरुलघुभेदेन संज्ञाभेदः । स यथा—

यस्यां सप्तविंशतिर्गुरवोलघवश्च त्रयः सा त्रिंशदक्षरा लक्ष्मीः । यस्यां षड्विंशतिर्गुरवोलघवश्च पञ्च सैकत्रिंशदक्षरा ऋद्धिः। यस्यां पञ्चविंशतिर्गुरवोलघवश्च सप्त सा द्वात्रिंशदक्षरा बुद्धिः । यस्यां चतुर्विंशतिर्गुरवो लघवश्च नव सा त्रयस्त्रिंशदक्षरा लज्जा। यस्यां त्रयोविंशतिर्गुरवोलघवश्चैकादश सा चतुस्त्रिंशदक्षरा विद्या। यस्यां द्वाविंशतिर्गुरवोलघवश्च त्रयोदश सा पञ्चत्रिंशदक्षरा क्षमा ॥

एवमेकैकगुरुह्रासेन द्विद्विलघुवृद्ध्या देवी गौरी रात्रिश्चूर्णा छाया कान्तिर्महामाया कीर्तिः सिद्धा मनोरमा गाहिनी विश्वा वासिता शोभा हरिणी चक्री सारसी कुरवी सिंही हंसीति समाख्यामियमार्या लभते । एकगुरुका न भवतीति नियमः। पठनरीतिश्चास्या अतिकठिना। सा यथा—

प्रथमपादस्य हंसपदवन्मन्थरा गतिः । द्वितीयस्य सिंहपदवदुद्धता । तृतीयस्य गजेन्द्रपदवत्सलीला । चतुर्थस्य सर्पगतिवच्चपला ॥

जातिभेदश्चास्या अतिगुप्तः स यथा—

त्रयोदशलघुर्विप्रा । एकविंशतिलघुः क्षत्रिया । सप्तविंशतिलघुर्वैश्या । तदन्या शूद्रा ॥

एकनायका कुलीना । द्विनायका संगृहीता । त्रिनायकाऽनुरक्ता । चतुर्नायकाऽधमा । नायकश्च जगणः ॥

यस्याः प्रथमतृतीयपञ्चमसप्तमस्थानेषु जगणोभवति सार्या दुष्टेति भामहकृतालङ्कारग्रन्थे स्पष्टम् ॥

अत्रायुङ्नज् ॥ १६ ॥

अत्रार्याछन्दसि—अयुग्विषमपदस्थितः प्रथमतृतीय पञ्चमसप्तमात्मकोजगणो न विन्यसनीयः। शेषस्थले कामचारः। एतन्मूलकमेव पूर्वोक्तं भामहाचार्यकथनम् ॥

षष्ठोज् ॥ १७ ॥

अत्रेति वर्त्तते—अत्रार्याछन्दसि नियमेन षष्ठोजगणः कर्त्तव्यः। पूर्वार्धविषयकमेतदपवादसूत्रम् ॥

एवमार्यायागणविन्यसननियमे जाते सति साम्प्रतं तदुदाहरणमाह—

"वेदोदितशुभकृत्या मानवधर्मप्रकाशरमणीया।
सार्यसमाजविवृद्धिर्मोदायास्तां नितान्तमार्याणाम् ॥१॥"

अत्र षष्ठस्थानस्थित (प्रकाशे) तिपदस्य जगणात्मकत्वाल्लक्ष्ये लक्षणसमन्वयः सुतरां पदन्निधत्ते। मानवधर्म प्रकाशो मनुप्रणीतं धर्मशास्त्रम् ॥

न्लौ वा ॥ १८ ॥

अत्रेति वर्तते। षष्ठइति च। उभयार्धविषयकं सूत्रमेतत्। नश्च लश्च न्लौ। नगणलघू इति भावः। अत्रार्याछन्दसि षष्ठस्थानस्थितजगणाभावे नगणाभावे नगणात्मको लघुः कर्तव्यः। उत्तरार्द्धे तु एकाक्षरात्मको लघुरेव षष्ठोगणोभवतीत्यग्रे (२२) सूत्रेण वक्ष्यते। आर्यायाः षष्ठोगणः सर्व-

लघुर्वा भवतीति पूर्वार्धे सामान्यतया नियमः । तत्रोदाहरणम्-

"भाग्योदयेन भव्यं भावेन स्तौति विपदि बहुलोकः ।
येन महामुनिना तं शुभमार्गेऽरं नियोजितः कृपया ॥२॥"

अत्र [तिविपदी]ति वर्णानां शुद्धनगणात्मकत्वं बोध्यम्। जगणोदाहरणमुक्तमेवास्मात्प्राक् । लघोरुदाहरणन्तु द्वाविंशे सूत्रे वक्ष्यते ॥

एवमार्याया उदाहरणमुक्त्वा यतिपदनियममाह-

न्लौ चेत्पदं द्वितीयादि ॥ १९ ॥

आर्यायाः पूर्वार्द्धे षष्ठोगणश्चेन्नगणात्मकः स्यात्तदा द्वितीयलघोः पूर्वमेव [ सपादपञ्चगणान्ते ] विश्रामः कर्त्तव्यः। यथा-[भाग्योदयेन भव्यं भावेन स्तौति] इति ॥

सप्तमः प्रथमादि ॥ २० ॥

आर्यायाः पूर्वार्धे सप्तमोगणोनगणात्मकश्चेत्तदा आद्य लघोः पूर्वमेव षष्ठगणान्ते विश्रामः कर्तव्यः । षष्ठस्तु जगणोवा स्यान्नगणो वा । यथा-

"यद्यप्यत्र समाजे विलीनमेवास्ति धूर्तजनकरणम् ।
आशासते तथापि प्रायोऽविज्ञास्त्वदूरदर्शित्वात् ॥३॥"

अत्र [ जनकरे ] ति सप्तमस्य नगणत्वम् । ततः पूर्वमेव तकारे विश्रामः कर्तव्यः ॥

एवं सूत्रद्वयेन पूर्वार्धे यतिनियममुक्त्वा साम्प्रतमुत्तरार्द्धे यतिनियमङ्कल्पयितुमाह-

अन्त्ये पञ्चमः ॥ २१ ॥

आर्याया: अन्त्ये उत्तरार्द्धे पञ्चमो गणो नगणात्मकश्चेत्तदा आद्यलघोः पूर्वमेव चतुर्थगणान्ते विश्रामः कर्तव्यः। यथा—
" स जयति भारतवर्षे पूर्णतयैकोयतिर्दयानन्दः।
सर्वत्र येन वैदिकमाराददनुजनितमार्यमस्तम् " ॥ ४ ॥

अत्र [ दनुजनि ] इति पञ्चमस्य नगणत्वम्। अतः पूर्वमेव रा इति वर्णे विश्रामः कर्तव्यः ॥

षष्ठश्च लू ॥ २२ ॥

अपवादोयम्। आर्याया उत्तरार्धे षष्ठोगण एकमात्रिकोलघुः कर्तव्यः अतएव नलौवेति सूत्रे पूर्वोत्तरार्धयोर्नियमनाय द्विवचनं विहितम्। अन्यथा नोवेति विदध्यात्। नगणस्य स्वयं लघुत्वात् ॥

यद्यपि पूर्वार्धवदुत्तरार्द्धेपि षष्ठस्य जगणत्वं नगणत्वं वा प्राप्तम्, परमनेन तथापि तद्बाध्यते। उदाहरणन्तु प्रागेव निदर्शितम् [ त ] कारस्यैकमात्रिकत्वात्। एतावतोत्तरार्द्धे एक एव विश्रामोनिर्दिष्टः ॥

आर्यालक्षणसूत्रे द्वितीयस्यापि यत्सार्धसप्तगणत्वं व्यवस्थापितं तत्षष्ठगणस्यैकमात्रिकत्वे न विहन्यते। तत्र केवलं पूर्वार्धवदुत्तरार्द्धेपि गणपरिगणनात् ॥

वर्णवृत्तवदत्र पादचतुष्टयकल्पनन्त्वऽयुक्तम्। अर्धस्य लक्षणात्। इतरथा तु कृतैकपादलक्षणेपि तत्सिद्धिसमावेशः स्यादेव। विश्रामस्थलमेवार्यायां पादत्वेन व्यवह्रियते। यत् सूत्रैर्निदर्शितम् तदेवोद्दिश्य गतिभेदः कल्पितोभामहैः ॥

यत्तु कालिदासेन श्रुतबोधे–यस्याः पादइति पद्यसुखेन आर्याया मात्रावृत्तत्वमाश्रित्य धृतपादव्यवस्थं मात्रा परिगणनं विहितन्तत्प्रमादिकमेव। आर्याया गणवृत्तत्वात्। पादकल्पनमप्ययुक्तमेव कृतार्धलक्षणत्वात् ॥

केदारभट्टेनापि वृत्तरत्नाकरे यन्मात्रावृत्तानुपूर्वकमिति प्रथमाध्यायान्ते पठित्वा मात्रावृत्तत्वमस्या अङ्गीकृतं तदुन्मत्तप्रलपितवत् ॥

एवमन्यैरपि गङ्गादासकुमारभट्टजगन्नाथाद्यैश्छन्दोमञ्जरीछन्दोमणिमालाछन्दःपीयूषछन्दोमुक्तावल्यादिषु यदार्याया मात्रावृत्तत्वमङ्गीकृतं तत्केवलं प्रौढवादमात्रमेवेत्यलमुपजीव्यानां मान्यानां ग्रन्थेषु कटाक्षनिक्षेपेण। प्रकृतमनुसरामः ॥

त्रिषु गणेषु पादः पथ्याद्ये च ॥ २३ ॥

यस्या आर्यायाः आद्ये पूर्वार्द्धे चकारादन्त्ये उत्तरार्द्धे च त्रिषु गणेषु पादः समाप्येत सार्या पथ्या नाम। अस्यामार्यायामाचार्येण पाद इति कथनमवान्तरभेदप्रसिपत्तये विहितम् । उदाहरणं यथा–

"अस्मिन्भारतवर्षे येनालं लोकदीपकमयेन ।
पथ्या वैदिकरीतिर्निदर्शिता वन्दनीयः सः" ॥ ५ ॥

अत्रोभयार्धयोरपि गणत्रयान्ते पदमविच्छिन्नम् । विच्छेदे तु विश्रामाभावो विपुलायाम्। यच्च तथाविधस्थलेपि विश्रामकल्पनं तद्वर्णवृत्तपरकम् । समासान्तपदेषु वसन्ततिलकादौ तद्दर्शनात् ॥

विपुलाऽन्या ॥ २४ ॥

अस्या आर्यायाः अन्त्ये अर्द्धे आद्ये वा उभयोर्वा त्रिषु गणेषु पादो न विश्राम्येत सार्या विपुला नाम, सा चेयमाद्यन्तोभयपूर्वकत्वात् त्रिधा। पूर्वार्द्धे लक्षणसमावेशादादिविपुला। उत्तरार्द्धे लक्षणसमावेशादन्तविपुला। उभयार्धयोः समावेशे उभयविपुला, सामान्येन विधानात्। तदुदाहरणं यथा—

"शौर्यौदार्यै लावण्यमप्यलं यस्य विस्मयप्रकरम्।
समभूदखिलार्यमहाशयोत्तमानां सकोप्यलं जयतात्॥६॥"

अत्रोभयोरपि पादयोर्गणत्रयान्तेऽविश्रमणात्प्रत्यर्थैव लक्ष्यलक्षणयोः सङ्गतिः ॥

चपला द्वितीयचतुर्थौ गमध्ये जौ ॥ २५ ॥

यस्या आर्यायाः द्वितीयचतुर्थौ गणौ पूर्वोत्तरगणयोरन्तादिगुरुत्वाद्गमध्यगौ जौ भवेतां सार्या चपलेति संज्ञां लभते। यथा—

"चपला न चेत्कदाचिन्नृणां भवेद्भक्तिरुत्तमा वेदे।
धर्मार्थकाममोक्षास्तदा करस्था न सन्देहः ॥ ७ ॥"

अत्र ( नचेत्क ) (नृणां भ)-(र्थकाम) ( तदा क ) इति पदानामुभयार्धयोर्गमध्यगत्वं द्रष्टव्यम् ॥

पूर्वे मुखपूर्वा ॥ २६ ॥

यस्या आर्यायाः पूर्वार्द्धे चपलालक्षणं स्यात्सा आर्या मुखचपला नाम। उदाहरणमुक्तम् ॥

जघनपूर्वेतरत्र ॥ २७ ॥

यस्या आर्यायाः उत्तरार्द्धे चपलालक्षणं स्यात्सार्या जघनचपला नाम। उदाहरणं प्रागेव ॥

उभयोर्महाचपला ॥ २८ ॥

यस्या आर्यायाः उभयोरप्यर्धयोर्यौगपद्येन चपला-लक्षणं स्यात्सार्या महाचपला नाम। उदाहरणमस्या अपि पूर्वमेव। चपलत्वं तु पाठक्रमगतमेव, सर्पगतिरवस्य पूर्वं प्रतिपादितत्वात् ॥

आद्यर्धसमा गीतिः ॥ २९ ॥

आद्येनार्धेन सममन्त्यमर्धं यस्याः सा आद्यर्धसमा। यस्या आर्याया उत्तरार्द्धेपि पूर्वार्धवत्षष्ठो गणोजगणात्मक श्चतुर्लघुरूपो नगणात्मको वा भवेत्सा आर्या गीतिर्नाम। यथा

"विधुरं गुरुकुलगमनं वेदाध्ययनं जितेन्द्रियत्वं च।
प्रथमे वयसि नितान्तं निषेव्यते यैस्त एव सत्पुरुषाः॥ ५

अत्रोभयार्धयोरपि षष्ठो जगणः। एवमुभयार्धयोर्न गणोदाहरणं विरच्य बोध्यम् ॥

अन्त्येनोपगीतिः ॥ ३० ॥

अन्त्येनार्धेन सममाद्यमर्धं यस्यां सा अन्त्यार्धसमा उपगीतिः। यस्या आर्यायाः पूर्वार्धेषूत्तरार्धवदेकलघुरूप षष्ठोगणः स्यात्सैवमुच्यते। आर्याया उत्तरार्द्धे तस्य नियत त्वाज्जगणनगणयोः समावेशराहित्यम्। षष्ठश्च ल् इत्येवना सूत्रप्रवृत्तिनियमात्। यथा–

"वेदाख्यं परमेश्वरदेवस्याऽलं ( द्वि ) षद्विजयि।
आर्याणां परमास्त्रं विलोक्यतां पोपमनुजैस्तत् ॥ ६

अत्रोभयार्धयोरपि [ द्वि ] [ ष ] इत्यक्षरद्वयात्मकः षष्ठोगण एकमात्रिक एवेति द्रष्टव्यम् ॥

उत्क्रमेणोद्गीतिः ॥ ३१ ॥

पूर्वोक्तात्क्रमाद्विपरीतः क्रमउत्क्रमः तेनोत्क्रमेण अर्थात् पूर्वार्धोत्तरार्धकृत्यव्यत्ययेनोद्गीतिरुपजायते। पूर्वार्धे षष्ठ-गणस्यैकलघुरूपत्वमुत्तरार्द्धे च जगणनगणात्मकत्वं व्यत्यय लक्षणम्। यथा–

" लोकोत्तरचरितानां प्रथमं ताव (न्म) नः स्वच्छम्।
पश्चाद्वाण्यपि सरसा बिभाति देह (स्य तत्प) रः प्रथितः १० "

अत्र पूर्वार्धे (म) इत्येकाक्षरात्मक एकलघुरूपः षष्ठो गणः। उत्तरार्धे तु ( स्य तत्प ) इति षष्ठो जगणः प्रत्यक्ष एव। एवमुत्तरार्धे नगणोपि क्वचिद्भवति ॥

अर्द्धे वसुगण आर्यागीतिः ॥ ३२ ॥

वसुगणवत्यर्द्धे अष्टगणात्मके इति यावत् परिकल्पिते सति सा आर्या आर्यागीतिर्नाम भवति। अष्टमस्यापि ग-णस्य पूर्णत्वे चतुर्मात्रत्वमुत्सर्गसिद्धम्। विशेषाभावादुत्त-रार्धमपि तादृशमेव=अष्टगणात्मकमित्यर्थः। अत्रोभया-र्धयोरपि षष्ठगणस्य जगणात्मकत्वं नगणात्मकत्वं वा कल्प्यम्। लघुरूपैकमात्रिकत्वं तु नेति नियमः। यथा–

"अलमखिलचरितकथनैरेतत्प्रत्यक्षमीक्ष्यते तस्य परम्।
अम्बाशङ्करनाम्नोद्विजस्य सूनोरितीयमार्यागीतिः ॥ ११ ॥ "

अत्रोभयार्धयोरपि षष्ठोजगणः। उभयार्धयोर्नगणो-दाहरणं तु विरच्य बोध्यम् ॥

अखिलानन्दरचिते वैदिके भाष्यविस्तरे ।
आर्यादिगणवृत्तानामवसानमभूदिदम् ॥

---*---

अतः परं मात्राछन्दोधिकारः प्रस्तूयते तमेवाह—

वैतालीयं द्विःस्वराअयुक्पादे युग्वसवोऽन्तेर्लगाः ॥ ३३ ॥

देहलीदीपकन्यायेन द्विरित्युभत्रापि संबध्यते । द्विः स्वराद्विर्वसव इति । अयुगिति विषमयोः प्रथमतृतीयपादयोर्ग्रहणम् । स्वरा इति सप्तसंख्योपलक्षणाद्द्विरावृत्तौ सप्तानां चतुर्द्दशमात्रत्वं प्रथमतृतीयपादयोः समायातम् । युगिति समयोर्द्वितीयचतुर्थपादयोर्ग्रहणम् । वसवइत्यष्टसंख्योपलक्षणाद्द्विरावृत्तावष्टानां षोडशमात्रत्वं द्वितीयचतुर्थपादयोः समायातम् ॥

अपरञ्च । पादचतुष्टयेपि ( नियमित ) मात्रान्तर्गतभागे, अयुजि षण्मात्राः, युजि चाष्टमात्राः, पूर्वं विहायावशिष्टमात्राणां स्थाने रगणलघुगुरवो निवेशनीयाः । तत्र रगणस्य मध्यलघुत्वात्पञ्चमात्राणां स्थाने समावेशः । लघोर्लघुतयैवावस्थानम् । गुरोर्द्वे मात्रे स्थलम् । एवं मात्राष्टकमेषां विन्यासादपहृतं भवतीत्यर्थः ॥

लः समुद्रागणइत्यतोलइत्यस्यानुवृत्तेः स्वरा इति पदेन मात्रोपादानं नादेयम् । तस्य सप्तसंख्योपलक्षणार्थकत्वात् ॥

यत्तु सूत्रे युगयुजोर्ग्रहणेपि हलायुधेन निजकृतायां मृतसञ्जीविन्यां वृत्तौ समुक्तं(एवं वैतालीयार्धंसिध्यति । द्वितीयमप्यर्धं तादृशमेवेति ) तदसत् । पदग्रहणेनार्धनिराकरणात् ॥

यच्च भामहेन पञ्चमाध्याये पठितमर्द्धे इति सूत्रमपकृष्य तत्समाधानं तदप्यसत् । तस्य तत्रैवाध्याये वर्णवृत्तान्तर्गतार्द्धसमवृत्ताधिकारे कतिपयवृत्तानां सिद्ध्यै पठितत्वात् । प्रकृतं चेदं मात्राछन्दः ॥

यच्चार्याधिकारसूत्रादर्धग्रहणमनुवर्त्य तत्समाधानं विधीयते तदप्यसत् । तत्र पादव्यवस्थाऽभावात्पूर्वार्धवदुत्तरार्धस्यापि नियतत्वात् । तस्यापि च गणच्छन्दोविषयकत्वात् ॥

एवं सूत्रार्थे परिकल्पिते साम्प्रतं तदुदाहरणमाह—

"जगदेकहितैकनिष्ठया निजधर्मैकपरप्रयोजनाः ।
जगतीतलमात्रमण्डले विरला एव भवन्ति ते जनाः" ॥१॥

अत्र पादचतुष्टयेपि नियतमात्रागणकल्पनं द्रष्टव्यम् ॥

औपच्छन्दसकम् ॥ ३४ ॥

पूर्वोक्तलक्षणलक्षिते वैतालीये छन्दसि यद्यन्ते एकस्य गुरोराधिक्यं स्यात्तदा तदेव वैतालीयमौपच्छन्दसिकमिति नामान्तरं लभते । एतावानेव वैतालीयादत्र भेदः यद्वैतालीये प्रथमतृतीयपादयोश्चतुर्दशमात्रात्मकत्वम् । द्वितीय चतुर्थयोश्च षोडशमात्रात्मकत्वम् । अत्र च गुरोराधिक्येन प्रथमतृतीयपादयोः षोडशमात्रात्मकत्वम् । द्वितीयचतुर्थयोश्चाष्टादशमात्रात्मकत्वम् । रलगाउभयत्र समाः । यथा—

" सकलैर्मनुजैः स एव वन्द्यो बलवान्भारतवर्षमात्रमध्ये ।
सकलानगुणान्निवार्य योऽलं सुगुणान्सर्वशएव सृष्टवान्नु" ॥२॥

अत्र चरणचतुष्टयेपि गुरोरेकस्याधिक्यं समीक्ष्यम् । वर्णनं तु महर्षेर्दयानन्दस्येति ॥

## आपातलिका भूगौग्॥ ३५ ॥

रलगानामपवादः । पूर्वोक्तलक्षणलक्षिते वैतालीये छन्दसि यदन्ते रलगान्निवार्य तेषां स्थाने भगगाः स्युस्तदा तद्वैतालीयमापातलिकेति संज्ञां लभते। मात्रास्तु वैतालीयवदेव, तुल्याः । यथा—

" गुरुकुलसेवी गुणरागी गुरुभक्तो नियमोचितवृत्तः ।
सकलहितैषी मितवादी यदि लोकः किमलभ्यमिह स्यात्"॥३॥

अत्र चतुर्ष्वपि पादेषु नियतमात्रागणकल्पनं विलोकनीयम् ॥

## शेषे परेण युङ् न साकम् ॥ ३६ ॥

पूर्वोक्तेषु वैतालीयेषु यासां मात्राणां नियमनं न विहितं ताः शेषशब्देनोच्यन्ते। ताश्च प्रथमतृतीयपादयोः षट्। द्वितीयचतुर्थपादयोश्चाष्टौ। तासु नियमविशेषमाह—वैतालीयाधिकारसूत्रादयुक्पादे युक्पादे चेति समनुवर्तते। तेनायं भावः—अयुक्पादे [ युक्समा मात्रा ] विषममात्रया साकं न मेलनीया। यथा द्वितीया तृतीयया साकं, चतुर्थी पञ्चम्या साकम् । युक्पादेपि [युक्समा मात्रा षष्ठी] विषमया सप्तम्या साकं न योजनीया । द्वितीयतृतीयकलादीनामेकेन गुरुणोपादानं न कार्यमित्याशयः । विषममात्राणां सममात्राभिः सहैक्यन्तु निजरुच्यपेक्षम्। कर्तव्यं वा न कर्तव्यम्॥

यथा प्रथमा द्वितीयया साकं, तृतीया तुरीयया, पञ्चमी षष्ठ्या सप्तम्या च मेलनीया, वा न मेलनीया । मेलने तु

(मात्राद्वयैक्यात्) प्रथमाक्षरस्य गुरुत्वम्। अमेलने तु वर्णद्वयविन्यसनमायातयेव। यथाऽस्माभिरेव पूर्वोक्तेषु त्रिषूदाहरणेषु कृतम्॥

एवमन्यत्रापि विषममात्राणां समक्षावस्थितसममात्राभिः साकं मेलनाऽमेलनयोर्मात्राद्वयैक्याद् गुरुत्वं, भेदे च यथावस्थितमात्राक्षरत्वं बोध्यम्। नियमान्तरमप्याह–

षट् चाऽमिश्राऽयुजि॥ ३७॥

पूर्वसूत्रान्नेत्यनुवर्त्तते। युजि समे [द्वितीये चतुर्थे च पादे] आद्याः षण्मात्राः (अमिश्राः) केवललघुरूपेण न प्रयोज्याः। किन्तु गुरुमिश्राएव प्रयोक्तव्या इति भावः। युजीति कथनादयुजोः प्रथमतृतीयपादयोः स्वरुचिः। उदाहरणमनयोः सूत्रयोः प्रागुक्तमेव, तद्यथा–

"निजधर्मैकपरप्रयोजनाः, विरलाएव भवन्ति ते जनाः।"

इति द्वितीयचतुर्थपादयोर्मध्ये आद्यानां षण्मात्राणां गुरुमिश्रभावेन विन्यसनम्॥

"जगदेकहितैकनिश्चयाः जगतीतलमात्रमण्डले।"

इति प्रथमतृतीयपादयोर्मध्ये सममात्राणां विषममात्राभिः साकं मेलनाऽभावः॥ विषममात्राणां समाभिः सह मेलनं तु रुच्यपेक्षया क्वचिद्विहितं, क्वचिन्न विहितम्। एवमौपच्छन्दसिकापातलिकोदाहरणयोरपि मध्ये लक्ष्यलक्षणसमन्वयः कर्तव्यः॥

पञ्चमेन पूर्वः साकं प्राच्यवृत्तिः॥ ३८॥

अपवादसूत्रमेतत् । युजीत्यनुवर्तते । शेषे परेण–युङ् न साकमिति सूत्रेण चतुर्थपञ्चममात्रयोरेकेन गुरुणोपादानं निषिद्धं तदनेन विधीयते । यदा द्वितीयचतुर्थपादयोर्मध्ये पूर्वश्चतुर्थोलः पञ्चमेन लेन साकं सङ्गच्छेत् ( अर्थाच्चतुर्थ-पञ्चममात्रयोरेकेन गुरुणोपादानं स्यात् ) तदा तदेव वैता-लीयं प्राच्यवृत्तीति संज्ञां लभते । यथा–

"निगमार्थविचारणोत्सुकाः कस्य नाम न हरन्ति संशयम् ।
यदि पूर्णतया जितेन्द्रियाः सर्वथैव मुनिवेषधारिणः " ॥ ४ ॥

अत्र द्वितीयचतुर्थपादयोर्मध्ये पूर्वः पञ्चमेन पदापे-क्षया संगच्छते । मात्राकल्पना रलगान्तता च वैतालीयवत् ॥

अत्र केदारभट्टेन ( पूर्वेण युतोऽथ पञ्चम इति ) लक्षणे (पञ्चमेन यदि पूर्वसङ्गतिः) इति पठितव्ये पञ्चमशब्दे या प्रथ-मान्तता विहिता सा विचारशून्यतामूलकैव सूत्रविरोधात् ॥

अयुक् तृतीयेनोदीच्यवृत्तिः ॥ ३९ ॥

पूर्वः साकमिति वर्तते । यदा अयुजि प्रथमे तृतीये च पादे पूर्वो द्वितीयलस्तृतीयेन साकं संगच्छेत( अर्थात् द्वितीयतृतीयमात्रयोरेकेन गुरुणोपादानं स्या- ) त्तदा तदेव वैतालीय-मुदीच्यवृत्तीति संज्ञां लभते । शेषं वैतालीय वत् । यथा–

"जितेन्द्रियमहर्निशं रतं निजधर्मे व्यसनैरनावृतम् ।
प्रमादरहितं च सज्जनाः प्रियभावैरनुमोदयन्त्यरम् " ॥५॥

अत्र प्रथमतृतीयपादयोर्मध्ये द्वितीयस्तृतीयेन पदा-पेक्षया सङ्गच्छते ॥

आभ्यां युगपत्प्रवृत्तकम् ॥ ४० ॥

आभ्यां पूर्वोक्तलक्षणलक्षिताभ्यां द्वाभ्यां सूत्राभ्यां युगपदेकदैव लक्षिते लक्ष्ये सद्वैव वैतालीयं प्रवृत्तकमिति संज्ञां लभते। अर्थाद्द्वितीयचतुर्थपादयोर्मध्ये चतुर्थस्य पञ्चमेन योगोभाव्यः। प्रथमतृतीययोश्च मध्ये द्वितीयस्य तृतीयेन योग इति भावः। शेषं वैतालीयवत्। यथा—

"अलं नियमदत्तचेतसां स्वामिनां जगदनुग्रहात्मनाम्।
विचित्रममलं गुणोन्नतं काव्यरत्नरचितं प्रशंसनम्" ॥ ६ ॥

अत्र समपादयोर्मध्ये ( चतुर्थः पञ्चमेन ) विषमपादयोर्मध्ये ( द्वितीयस्तृतीयेन ) मात्रापेक्षया पदापेक्षया वा सङ्गच्छते ॥

अयुक् चारुहासिनी ॥ ४१ ॥

यस्य सर्वे पादाः १। ३ अयुग्लक्षणलक्षिताः स्युस्तद्वैतालीयं चारुहासिनीति संज्ञां लभते। तच्च लक्षणं चतुर्दशमात्रत्वं द्वितीयस्य तृतीयेन योगश्चेति भावः। यथा—

"धृतिप्रसूतयोगशोभना गुणोल्लसितविम्बमण्डला।
प्रसादरुचिरा दयानिधेर्मनोहरति सार्यपङ्क्तिः" ॥७॥

दयानिधेर्दयानन्दस्य कृपयोद्धृतेति शेषः। अत्र सर्वेष्वपि चरणेषु चतुर्दशमात्रत्वं द्वितीयस्य तृतीयेन मात्रापेक्षया पदापेक्षया वा योगश्च समन्वेति ॥

युगऽपरान्तिका ॥ ४२ ॥

यस्य सर्वे पादा युग्लक्षणयुक्ताःस्युः तद्वैतालीयमऽपरान्तिकेति संज्ञां लभते। तच्च लक्षणं षोडशमात्रत्वं चतुर्थस्य

पञ्चमेन योगः षष्ठ्यां मिश्राणां प्रयोगश्चेति भावः । यथा–
"अतिगुणापि विगुणेव सा विभोः सकललोकभर्त्री शुभावहा।
जगति कस्य हृदयं न सङ्गता वदतु कोऽपि नितरां प्रभावता" ॥८॥
अत्र सर्वेष्वपि पादेषु सूत्रभाष्याऽनुरूपं लक्षणं संगच्छते॥
" कविरत्नप्रणीतेऽत्र वैदिके भाष्यविस्तरे ।
वैतालीयाधिकारोपि पूर्तिमेवान्वगाद्द्रुतम् "

---

अतः परं मात्रासमकाधिकारः प्रस्तूयते । तमेवाह–

गन्ताद्विर्वसवो मात्रासमकं नवमः ॥ ४३ ॥

गोन्ते येषान्ते गन्ताः । द्विरावृत्तावसवोद्विर्वसवः षोडश मात्रा इत्यर्थः। यत्र पादे गन्ताः षोडशमात्रा भवन्ति तन्मात्रा-समकं नामच्छन्दोभवति । गन्त्य इत्यनेनैवान्त्यस्य गुरुत्वे सिद्धे पुनर्गन्तग्रहणमातिदेशिकगुरुत्वनिवृत्त्यर्थम् । तेनात्र द्वौ लकारौ भङ्क्त्वा द्विमात्रिकोगुरुः पादान्ते सर्वत्राधिकार मात्रे क्रियत इति भावः। नवमश्च लघुरेव। शेषं यथा प्राप्तम्। यथा–

" अक्षप्रभृतिसमस्ते लोके नव्यं नव्यं भवतां भव्यम् ।
नित्यं मनुजैरपि सेव्यन्तां हव्यैः कव्यैरनलाः पितरः" ॥९॥
अत्र गन्तषोडशमात्रत्वं नवमस्य लघुत्वं च स्पष्टम् ॥

द्वादशश्च वानवासिका ॥ ४४ ॥

यत्र मात्रासमके द्वादशश्चकारान्नवमश्च लकारः प्रत्यक्ष तयाऽनुदृश्येत तन्मात्रासमकं वानवासिकेति संज्ञां लभते । गन्तषोडशमात्रत्वं पूर्ववत् । यथा–

"वैदिकधर्मधरनिरमणीयो विजयमहोत्सवपटहनिनादः ।
नितरामार्यप्रतिनिधिजन्यः कस्य न चेतो रमयति पुंसः" ॥१०॥

अत्र गन्तषोडशमात्रत्वं नवमद्वादशयोश्च लघुत्वं प्रत्यक्षतया दरीदृश्यत एव ॥

विश्लोकः पञ्चमाष्टमौ ॥ ४५ ॥

द्वादशग्रहणं नवमग्रहणं च निवृत्तम् । यत्र चतुर्ष्वपि चरणेषु पञ्चमाष्टमौ लकारौ स्वरूपेणावतिष्ठेतां, गन्तषोडशमात्रत्वं च पूर्ववत्स्यात्तन्मात्रासमकं विश्लोक इति संज्ञां लभते । यथा–

"स्वामिन्बहुमतगं सश्लोकं प्रस्तरनमनविवर्धितशोकम् ।
भ्रष्टं निगमपथादपि मोहाच्छीघ्रं विनमय भारतवर्षम्" ॥११॥

अत्र गन्तषोडशमात्रत्वं पञ्चमाष्टमयोर्लघुत्वं च ॥

चित्रा नवमश्च ॥ ४६ ॥

यस्मिन्मात्रासमके समस्तपादेषु । नवमश्चकारात्पञ्चमाष्टमौ च लकारौ निजरूपेणावतिष्ठेतां तच्चित्रेति संज्ञां लभते ॥

नवमइत्यनुवर्तमाने पुनर्नवमग्रहणमुपचित्राप्रतिप्रसव प्रयोजकम् । यथा–

"अयि वाञ्छसि यदि मुदमत्यन्तां शीघ्रं गुरुकुलमनुसर तावत् ।
जाह्नविपरिसरः विद्यावासं यत्राभवति हि मनुजो विद्वान्" ॥१२॥

अत्र गन्तषोडशमात्रत्वं पञ्चमाष्टमनवमानां च लघुत्वं समीक्ष्यम् ॥

परयुक्तेनोपचित्रा ॥ ४७ ॥

पूर्वं लघुनियमेन लक्षणं प्रोक्तमिदानीं गुरुनियमेनाह—यत्र मात्रासमके समस्तपादेषु परयुक्तेन दशमेन सह एकीभूते नवमेन रचना स्यात्तदुपचित्रेति संज्ञां लभते। यथा—

"यद् द्रव्यं परमार्थ इति स्वे विद्याभ्यासकृते जनवर्यैः।
नित्यं कोषतले ध्रियतेऽलं तन्न कदापि समेति विनाशम्"॥१३॥

अत्र गन्तषोडशमात्रत्वं पराश्रितेन दशमेन सह नवमस्यैकीभावश्च बोध्यः॥

एभिः पादाकुलकम्॥ ४८॥

सङ्करमाह—एभिः पूर्वलक्षणलक्षितैः परस्परमिलितैर्यैः कैश्चिदपि चतुर्भिः पादैर्या काचित्पद्यरचना क्रियेत सा सर्वापि पादाकुलकेति संज्ञां लभते। सामान्यतया विधानमेतत्। तत्र मात्रासमकविश्लोकवानवासिकोपचित्राणां पादैरुदाहरणम्। यथा—

"यदि वेदोदितनिजनिजधर्मे मन्ये मनुजवरा अपि सर्वे।
ध्यात्वा चित्ते बहुगुणमीशं लग्ना नितरां स्युर्बहु भद्रम्"॥१४॥

अत्र प्रथमे पादे नवमस्य, द्वितीये पञ्चमाष्टमयोस्तृतीये नवमद्वादशयोर्लघुत्वेनावस्थितिश्चतुर्थे परमुक्तेन दशमेन सहैकभूतस्य नवमस्य व्यवस्थितिश्च बोध्या। गन्तषोडशमात्रत्वं तु सर्वपादेषु समम्॥

एवं कस्यचिदेकेन पादेन कस्यचिद् द्वाभ्यां पादाभ्यां पादाकुलकमुत्पद्यते, तत्सर्वं मात्रासमकाधिकारे बोध्यम्॥

वर्त्तमानकविश्रेष्ठाऽखिलानन्दविनिर्मिते।
मात्रासमाधिकारोऽपि भाष्ये पूर्तिमुपागतः॥

साम्प्रतं गीत्यार्याभेदाः प्रस्तूयन्ते, तानेवाह–

गीत्यार्या लः ॥ ४९ ॥

लइत्यनुवर्त्तमाने पुनर्लग्रहणं द्विमात्रिकनिवृत्त्यर्थम्। यत्र पादे [द्विर्वसवः]षोडशलकारा भवन्ति सा गीत्यार्या नाम छन्दोजातिर्भवति। यथा–

"यदि तव शुभकृतिमनगतमतिशयि
मन इति मम पुनरनुगिरमनुसर।
परिहर जनभयमुपनदि कुरु गृह-
मनुदिनमनुवद शिव इति जनवर" ॥१५॥

अत्र पादचतुष्टयेष्वपि षोडशमात्रा लघुरूपेणैवाव-स्थिता विलोकनीयाः ॥

शिखा विपर्यस्ताऽर्द्धा ॥६०॥

विपर्यस्तं विपरीतमर्द्धं यस्याः सा विपर्यस्तार्द्धा। यदि पूर्वलक्षणलक्षिता गीत्यार्या विपरीतार्द्धा स्यात्तर्हि शिखेति संज्ञां लभते। अर्द्धग्रहणात्पादकल्पनानिवृत्तिः। वैपरी-त्यञ्च पूर्वोत्तरार्द्धयोर्गुरुलघुमूलकमेव। तच्च कथं स्यादित्य-पेक्षायां सूत्रान्तरमाह–

लः पूर्वश्चेज्ज्योतिः ॥ ६१ ॥

पूर्वश्चेदर्धभागः सर्वलघुः स्यादुत्तरश्च सर्वगुरुस्तर्हि सा शिखा ज्योतिरिति नामान्तरं लभते। यथा–

"जगदिदमतिलघु फलमिव खिलुठति।
महदपि महिमनि रविशशिगतिमति॥
सोऽलं सर्वैः सेव्योमर्त्यैरीशः साक्षी कूटस्थोऽरम्" ॥१६॥

अत्र पूर्वार्धस्य लघुत्वमुत्तरार्द्धस्य गुरुत्वञ्च ॥

गश्चेत्सौम्या ॥ ८२ ॥

पूर्वश्चेदर्धभागः सर्वगुरुः स्यादुत्तरश्च सर्वलघुस्तर्हि सा शिखा सौम्येति संज्ञां लभते । यथा—

"यस्मिन्दृष्टे सर्वन्दृष्टं चित्तस्यान्तर्नूनं भाति ।
गृहगतघनमिव करगतफलमिव ।
निजहृदि जनवर तमनिशमनुभज" ॥ १७ ॥

अत्र पूर्वार्धस्य गुरुत्वमुत्तरार्द्धस्य लघुत्वञ्च द्रष्टव्यम् । षोडशमात्रत्वं तु प्रकृतमेव ॥

चूलिकैकोनत्रिंशदेकत्रिंशदन्ते ग् ॥ ५३ ॥

अर्द्धेत्यनुवर्तते । यस्य छन्दसः पूर्वार्द्धे एकोनत्रिंशल्लघवो भवन्त्युत्तरार्द्धे चैकत्रिंशत्तच्छन्दश्चूलिका नाम । पूर्वोत्तरार्द्धयोरन्त्यौ द्वौ लघू निवार्य तयोः स्थाने एकोलघुः कर्तव्य इति सूत्रान्तभागार्थः । अन्ते गिति कथनादन्येषां लघुत्वं द्योत्यते । गीत्यार्याभेद एवायम् । यथा—

"यदि तव गिरिवनपरिसरविषय–सुखमतिगुण-
करमिहसमये । अनुभवमपि कुरु बुधवर जगदिद–
मखिलविकलमिति हृदि विमलतया" ॥ १८ ॥

अत्र पूर्वार्द्धे सप्तविंशतिलघवोगुरुश्चोत्तरार्द्धे एकोनत्रिंशल्लघवोगुरुश्चान्तेऽवगन्तव्यः ॥

साम्प्रतं गणमात्राछन्दसां मध्ये गुरुलघुमात्रावर्ण परिज्ञानाय सम्बोधकं सूत्रमाह—

स्वा गू येन समा लां ग्ल इति ॥ ६४ ॥

येन=यावद्भिरक्षरैः, लां=लघुमात्राणां समा=समसंख्या ग्लः वर्णैः समाना स्यात् सा गुरुसंख्या वेदितव्या । ग्ल इति वर्णसूचकोनिर्देशः ॥

गणमात्रा वृत्तानां मध्ये—लघुमात्राभिः समा यदि पद्ये वर्णसंख्या न मिलेत्तर्हि तदन्तर्गतगुरुभ्यः साऽवगन्तव्या । गुरूणां मात्राकल्पनां विधाय नियतमात्रापूर्तिः कर्तव्येति भावः । लघुमात्राकल्पनन्तु "लः समुद्रागण" इत्यनेन तत्तच्छन्दःसु विहितम् । अत्रायमाशयः—आर्यादिगणवृत्तेषु यावत्योमात्रा गणनिर्वचनमुखेन तत्तत्सूत्रैस्तत्र तत्रोपदिष्टास्तावन्ति मात्रासमकान्यऽक्षराणि पूर्णतया तेषु न मिलन्ति । तानि तेषु गुरुभूतानि गुरुरूपेणावस्थितानि गुरुषु मात्राभावमाप्तानि बोध्यानि । अवशिष्टानि गुरुभ्यो लघूनि ॥ यथा—द्वात्रिंशदक्षरायामुपगीत्यार्यायां कति गुरवः कति वा लघव इति जिज्ञासायां चतुःपञ्चाशन्मात्रात्मिकायां तस्यां वर्णमिति द्वात्रिंशत्संख्यामपनीय पुनर्येऽवशिष्टाः स्युस्तान् गुरूनऽवगच्छेत् । ते च द्वाविंशतिसंख्याकाः । शेषास्तु*दश ते लघवः । द्वाविंशतिसंख्यात्मकगुरूणां मात्राकल्पनाऽवसरे द्वैगुण्येन चतुश्चत्वारिंशन्मितमात्रानिष्पत्तौ दशलघुमात्राणां योजनाच्चतुष्पञ्चाशदिष्टमात्राणां समुद्भूतिः । यथा—

" तत्रानन्दारामे नितरामानन्दयंल्लोकान् ।
सानन्दं किल कृतवान्वसतिं श्रीमान्दयानन्दः " ॥

* ३२ को ५४ में घटाया । रहे २२ वे गुरु- बचे १० लघु ॥

मत्कृते श्रीदयानन्दविजयमहाकाव्ये षष्ठसर्गे वाराणसीविजयप्रसङ्गे उपगीत्यार्येयम्। अस्यामेव द्वाविंशतिर्गुरवोदश च लघव इति कृत्वा गुरूणां मात्राकल्पनेन चतुष्पञ्चाशन्मात्रानियम इति भावः। एव मन्यत्रापि गणमात्रा वृत्तमध्ये विभागः कर्तव्यः। मात्राछन्दः समाप्तमिति सर्वे विदाङ्कुर्वन्तु ॥

इति श्रीमद्वर्तमानकविरत्नाऽखिलानन्दशर्म
प्रणीतवैदिकभाष्योपेते छन्दःसूत्रे
गणमात्राछन्दोनिर्वचनं नाम
चतुर्थोध्यायः प्रपूर्णः
॥ ४ ॥

# अथ पञ्चमोऽध्यायः

पूर्वस्मिन्नध्याये गणमात्राछन्दोविवेचनं विहितमिदानीमक्षरच्छन्दोनिर्वचनाय नवीनसंज्ञानिर्देशपुरःसरं पञ्चमाध्यायमारभते ॥

वृत्तम् ॥ १ ॥

अधिकारोयमाशास्त्रपरिसमाप्तेः । यदितोऽग्रे कथयिष्यामस्तत्सर्वं वृत्तमधिगन्तव्यम् । पूर्वोक्तलौकिकच्छन्दसो जातित्वेन व्यवहृतिरुत्सर्गसिद्धा । तस्य चच्छन्दसो द्वे नामनी समवगन्तव्ये । गायत्र्यादौ छन्दसि वर्तनाद्द वृत्तम् । तदेव पादेन संयोगात्पद्यम् । आर्यादावुभयाऽभावाज्जातित्वम् । तस्य च वृत्तस्य त्रैविध्यं दर्शयन्नाह–

सममर्द्धसमं विषमञ्च ॥ २ ॥

तद्द वृत्तं वेदितव्यमिति वाक्यशेषः । यस्य चत्वारोपि पादाएकलक्षणलक्षितास्तत्समम् । अर्धे समे यस्य तदर्धसमम् । विगतं समं यस्मात्तद्विषमम् । तत्र समं तनुमध्यादि । अर्धसमं द्रुतमध्यादि । विषमं च पदचतुरूर्ध्वादि सर्वमग्रे वक्ष्यते । तत्र समसंख्या तत्तदधिकारेषु संख्याङ्कैर्निदर्शयिष्यते ॥ अर्द्धसमवृत्तज्ञानाय प्रकारमाह–

समं तावत्कृत्वःकृतमर्द्धसमम् ॥ ३ ॥

समं वृत्तं तावत्कृत्वःकृतं=तथैव संख्यया गुणितम् अर्द्धसमं भवति । "संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ।"

क्रियाभ्यावृत्तिर्गुणनम् । तावदङ्केन गुणितं तावत्कृत्वः । कृतमिति गुणनाऽपरपर्यायः । समवृत्तसंख्याङ्कं समवृत्तसंख्याङ्केन गुणितमर्धसमं भवतीत्याशयः । इह "राश्यूनमिति" पञ्चमसूत्रमपकृष्य समन्वयो विधेयः । राशिश्च मूलसंख्या । तत्रायं प्रकारः—यदा तत्तज्जातिषु अर्द्धसमवृत्तसंख्यां ज्ञातुमिच्छेत्तदा समसंख्याङ्कं तावतैव गुणितं कृत्वा सिद्धेऽङ्के सम संख्याङ्कं नाशयेत् । तदङ्कं राश्यूनं विदध्यादिति भावः । एवं कृते अर्धसमवृत्तसंख्या निष्पद्यते । यथा—अक्षरप्रस्तारे समसंख्याङ्कमष्टौ ८ अष्टावष्टभिर्गुणिताश्चतुःषष्टिः ६४ तन्मध्येऽष्टसंख्याङ्कं न्यूनं कृत्वा अवशिष्टाः षट्पञ्चाशत् ५६ तावत् संख्याकान्येवार्द्धसमानि ॥

यथा वा—चतुरक्षरप्रस्तारे समसंख्याङ्कं षोडश १६ षोडश षोडशभिर्गुणिताः द्विशतोत्तरषट्पञ्चाशत् २५६ तन्मध्ये षोडशसंख्याङ्कं न्यूनं विधायाऽवशिष्टाः द्विशतोत्तरचत्वारिंशत् २४० इयमेवार्द्धसमसंख्या ॥

यथा वा—पञ्चाक्षरप्रस्तारे समसंख्याङ्कं द्वात्रिंशत् ३२ द्वात्रिंशत्संख्याङ्कं द्वात्रिंशत्संख्याङ्केन गुणितं १०२४ एतन्मितं भवति । तन्मध्ये ३२ संख्याङ्कं न्यूनं विधायाऽवशिष्टाः ९९२ इयमेवार्धसमसंख्या ॥

यथा वा—षडक्षरप्रस्तारे समसंख्याङ्कं चतुःषष्टिः ६४ चतुःषष्टिसंख्याङ्कं, चतुःषष्टिसंख्याङ्केन गुणितं ४०९६ एतन्मितं भवति । तन्मध्ये ६४ संख्याङ्कं न्यूनं विधायाऽवशिष्टाः ४०३२ इयमेवार्द्धसमसंख्या । एवमन्यत् ॥

इत्थमर्धसमसंख्या परिज्ञानानन्तरं विषमसंख्या परिज्ञानार्थमाह—

विषमं च ॥ ४ ॥

अर्धसमवृत्ताङ्कम् अर्धसमवृत्ताङ्केन गुणितं विषमवृत्ताङ्कं भवति। अत्रायं प्रकारः—यदा तत्तज्जातिषु विषमवृत्तसंख्यां ज्ञातुमिच्छेत्तदा अर्धसमवृत्तसंख्याङ्कम् अर्धसमवृत्तसंख्याङ्केन गुणितं विधाय सिद्धेऽङ्के अर्धसमवृत्तसंख्याङ्कं नाशयेत्। राश्यूनं विदध्यादिति भावः। एवं कृते विषमवृत्तसंख्या निष्पद्यते। सा यथा—

त्र्यक्षरप्रस्तारे—अर्धसमवृत्तसंख्या ५६ अस्याः अनयैव गुणने ३१३६ तन्मध्ये ५६ न्यूनां विहायाऽवशिष्टा ३०८० सैव विषमवृत्तसंख्या प्रस्तुतप्रस्तारे बोध्या ॥

यथा वा—चतुरक्षरप्रस्तारे अर्धसमवृत्तसंख्या ११२ अस्या अनयैव गुणने १२५४४ तन्मध्ये ११२ न्यूनां विहायाऽवशिष्टा १२४३२ सैव विषमवृत्तसंख्या चतुरक्षरे ॥

यथा वा—पञ्चाक्षरप्रस्तारे अर्धसमवृत्तसंख्या ९९२ अस्या अनयैव गुणने ९८४०६४ तन्मध्ये ९९२ न्यूनां विहायाऽवशिष्टा ९८३०७२ सैव विषमवृत्तसंख्या पञ्चाक्षरे ॥

यथा वा—षडक्षरप्रस्तारे अर्धसमवृत्तसंख्या ४०३२ अस्या अनयैव गुणने १६२५७०२४ तन्मध्ये ४०३२ न्यूनां विधायाऽवशिष्टा १६२५२९९२ सैव विषमवृत्तसंख्या षडक्षरे। एवमन्यत् ॥

राश्यूनम् ॥ ५ ॥

तदर्धसमं वृत्तं विषमं वा राश्यूनं कर्तव्यम् । राशिर्मूल संख्या तया न्यूनं विधेयम् । मूलराशिः समुदायादपनेतव्य इत्यर्थः । एतत्सूत्रं पूर्वसूत्राभ्यां सङ्गच्छते, तयोर्भाष्यएवो- दाहृतञ्च। समवृत्तसंख्यानिर्णयस्तु प्रस्तारेण मेरुणा चाष्ट- माध्याये निदर्शयिष्यते ॥

साम्प्रतं समार्धसमविषमाधिकारेभ्यो भिन्नस्तेभ्यः प्राग्वर्णविषमवृत्तानुगामी वक्राधिकारः प्रस्तूयते तमेवाह-

## ग्लिति समानी ॥ ६ ॥

अत्र नवमसूत्रादनुष्टुबित्यस्यापकर्षणे तस्य चाऽष्टाक्ष- रात्मकत्वात्तावतामेव ग्लां ग्रहणम्। यत्रोत्तरोत्तरं गुरुलघु- भ्यां पादपूर्तिर्जायेत तद् वृत्तं समानीत्याख्यां लभते। यथा-

" शङ्करोपि दिग्जयेन यत्समानतां न याति ।
तस्य मूलशङ्करस्य केन तुल्यता क्रियेत " ॥ १ ॥

अत्र प्रतिपादमुत्तरोत्तराणामष्टक्षराणां समावेशः। शङ्करः शङ्कराचार्यः।मूलशङ्कर इति महर्षेर्दयानन्दस्य प्राक्तनं नाम॥

## लिति प्रमाणी ॥ ७ ॥

यत्रोत्तरोत्तरं लघुगुरुभ्यां पादपूर्तिर्जायेत तद् वृत्तं प्रमाणीति संज्ञां लभते । यथा-

" दयानिधेरियं दया यदत्र भूतले परा ।
समाजवृद्धिरुत्तरोत्तरा निरीक्ष्यते जनैः " ॥ २ ॥

अत्र प्रतिपादमुत्तरोत्तरं लघुगुरुसमावेशः। दयानिधे रिति पदेनेश्वरस्य ग्रहणम् ॥

वितानमन्यत् ॥ ८ ॥

आभ्यां पूर्वोक्ताभ्यां समानीप्रमाणीभ्यां यदन्यदऽष्टाक्षरपादं वृत्तं तत्सर्वं वितानमिति संज्ञां लभते । यथा–

"मूर्त्तिं जहि वेदं श्रय विषये चेतो मा नय ।
कामया यदि मुक्तिस्तव विद्यामनिशं सेवय" ॥ ३ ॥

एतत्सूत्रत्रयं केदारभट्टगङ्गादासाद्यैर्मदान्धतया निजरुच्यनुसारेण भिन्नतया गणनिर्देशपुरःसरं निर्दिष्टं तन्महर्षिविरोधान्मनुष्यकृतकत्वाच्च सहृदयहृदयैर्नादर्तव्यम् ॥

पादस्यानुष्टुब्वक्त्रम् ॥ ९ ॥

पादस्येत्यासप्तमाध्यायपरिसमाप्तेरधिकारः। पदचतुरूर्ध्वात्प्रागनुष्टुबित्यधिक्रियते। वक्त्रमिति प्रकरणनिर्देशार्थम्॥

न प्रथमात्स्नौ ॥ १० ॥

प्रतिषेधोयम् । अत्र वक्त्रजातौ सामान्यतया समस्तपादेषु प्रथमाऽक्षरात्परौ सगणनगणौ न प्रयोक्तव्यौ ॥

द्वितीयचतुर्थयोरश्च ॥ ११ ॥

विशेषविधानमेतत्। द्वितीयचतुर्थपादयोर्मध्ये प्रथमादऽक्षरात्परं रगणोपि न प्रयोक्तव्यः, का कथा पुनः सगणनगणयोः ॥

वाऽन्यत् ॥ १२ ॥

व्यवस्थितविभाषेयम् । अत्र वक्त्रजातौ पादमात्रे प्रथमादऽक्षरात्परं मगणादीनां मध्ये यत्किञ्चित्त्रिकान्तरं वा कर्त्तव्यम् । न नियमेनेत्यर्थः ॥

यश्चतुर्थात् ॥ १३ ॥

नियमसूत्रमेतत्। पादस्य चतुर्थादऽक्षरात्परं नियमेन यगणः प्रयोक्तव्यः। सर्वेषामुदाहरणमेतत्। यथा—

"मतवादौघसंविष्टमनुजोद्घोषसंस्रवात्।
सावधानतया स्थेयं सर्वैरपि महाशयैः" ॥ ४ ॥

उत्तरसूत्रे—युक्पादयोर्ग्रहणादऽयुक्पादएवात्र चतुर्थादऽक्षरात्परं यगणप्रयोगः ॥

पथ्या युजोज् ॥ १४ ॥

यत्र द्वितीयचतुर्थपादयोर्मध्ये चतुर्थादऽक्षरात्परं जगणः प्रयुज्यते तद्वक्त्रजातौ पथ्येति संज्ञां लभते। यकारापवादोऽयम्। यथा—

"लोके धर्मपथस्थस्य मन्ये बुद्धिर्न नश्यति।
यदि वैदिककार्येषु निरालस्यतया व्रजेत्" ॥ ५ ॥

विपरीतैकीयम् ॥ १५ ॥

एकस्येदं मतमेकीयम्। त्यदादित्वाद् वृद्धसंज्ञायां छः। एकस्याचार्यस्य मतमेतदित्यर्थः ॥

यत्र प्रथमतृतीयपादयोर्मध्ये चतुर्थादऽक्षरात्परोजगणः प्रयुज्येत तद्वक्त्रजातौ पथ्याविपरीतेति वृत्तं भवति। यथा—

"वेदमार्गानुगामिनी या धीः स्यात्सा समीचीना।
अन्यवादानुवर्तिनी विपरीताऽसमीचीना" ॥ ६ ॥

चपला युजोन् ॥ १६ ॥

यदा प्रथमतृतीयपादयोर्मध्ये चतुर्थादक्षरात्परं नगणः स्याद्, द्वितीयचतुर्थपादयोश्च मध्ये यगणस्तद्वक्त्रजातौ चपलेति संज्ञां लभते। यथा—

" पूर्वपुण्यैरधिगता वेदसिद्धान्तविस्तृतिः ।
मानसे नित्यममले लभतां मेऽद्य संवासम् " ॥ ७ ॥

विपुला युग्लः सप्तमः ॥ १७ ॥

यकारापवादोयम् । यदा द्वितीयचतुर्थपादयोर्मध्ये सप्तमोवर्णो लघुः स्यात्तदा तद्वृत्तं विपुलाऽनुष्टुब्भवति ॥

सर्वतः सैतवस्य ॥ १८ ॥

सर्वापवादोयम् । यदा समस्तेषु पादेषु सप्तमोवर्णोलघुः स्यात्तदा सैतवर्षेर्मतेऽपि विपुला भवति उभयोरुदाहरणं यथा—

"वैदिकेन पथाऽन्वहं योयोव्रजति मानुषः ।
स एव सर्वत्र पुनः प्रतिष्ठां याति निश्चलाम् " ॥ ८ ॥

भ्रौ न्तौ च ॥ १९ ॥

सर्वतः सैतवस्येति निवृत्तम् । यत्र प्रथमतृतीयपादयोर्मध्ये चतुर्थादक्षरात्परं यगणं बाधित्वा तस्य स्थाने पर्यायेण भगण रगण नगण तगणाः प्रयुज्येरन् तद्वृत्तं विपुला नाम । द्वितीयचतुर्थपादयोर्मध्ये सप्तमस्य लघुत्वमनुवर्तत एव । सर्वासां विपुलानां चतुर्थोवर्णः प्रायेण गुरुर्भवतीत्याम्नायः । तत्र भ—विपुलोदाहरणम् यथा—

" अहो वयं धन्यतमाः कृतार्थाश्चाऽपि सर्वशः ।
यदार्यमात्रे नितरां सेवकत्वमुपागताः " ॥ ९ ॥

र—विपुलोदाहरणम् यथा—

" विद्यानिधिं विश्ववन्द्यं विलक्षणपराक्रमम् ।
दयामयं दयानन्दं प्रणमामि त्रयीपरम् " ॥ १० ॥

न-विपुलोदाहरणम् यथा-

" यस्याऽखिलेऽपि विपुला कीर्तिरेका विराजते ।
स एव जीवनफलं प्राप्नोति पुरुषोत्तमः " ॥ ११ ॥

तकारविपुलोदाहरणम् यथा-

"वन्दे गुरुं ज्ञानप्रदं पूर्णसाहित्यपण्डितम् ।
वेदान्तगं विश्वनुतं शमादिगुणमण्डितम् " ॥ १२ ॥

इदानीं चकाराकृष्टं मकारविपुलोदाहरणम् यथा-

" शमादियुक्तं लावण्यं दधती सुमनोहरा ।
ममापि नित्यं संवासं लभतां हृदये सुधीः " ॥ १३ ॥

सकारेणापि क्वचिद्विपुला दृश्यते । सा यथा-

" यमेन लभते विद्यां विद्यया लभते धनम् ।
धनेन लभते सौख्यं सौख्येन लभते मुदम् " ॥ १४ ॥

एवमन्येऽपि काव्येषु ये भेदा लभ्येरंस्ते सर्वेऽपि विपुलास्वेव निवेशनीयाः ॥

कविरत्नेन रचिते भाष्यरत्ने यथायथम् ।
वक्त्राधिकारसंपूर्तिरपि जातेति बुध्यताम् ॥

निवृत्तोनुष्टुबधिकारः । साम्प्रतं विषमवृत्ताधिकारः प्रस्तूयते । तत्रापि पदचतुरूर्ध्वाधिकारस्तमेवाह-

प्रतिपादं चतुर्वृद्धया पदचतुरूर्ध्वम् ॥ २० ॥

चतुर्णामक्षराणां वृद्धिश्चतुर्वृद्धिस्तया चतुर्वृद्धयेति निर्वचनम् । यत्राऽनुष्टुभः पादादूर्ध्वं प्रतिपादं चतुरक्षरवृद्धिः स्यात्तदन्वर्थं पदचतुरूर्ध्वं नाम वृत्तं भवति । गुरुलघुविभागस्तु नाऽत्रेष्यत इति वृत्तिकारः । तदनुकूलः कविसमयश्च । यथा-

वेदोक्तमन्त्रनिचयैः ८
खण्डिततत्तन्मतानुवादचयः १२ ॥
प्रस्तरपूजननिरतो बहुपोपसमाजः १६
पदचतुरूर्ध्वं न चलति बहुशः स्खलति सहसैव ॥२०॥

गावन्त आपीडः ॥ २१ ॥

यदि नियताक्षराणां चतुर्णां पादानामन्ते गुरुद्वयं नियमेन स्यात्तदस्मिन्नधिकारे आपीडेति संज्ञां लभते। अन्ते गुरुद्वयनियमाच्छेषाणां लघुत्वम्। यथा—

अधिगतनियमाङ्गे ८
प्रतिदिनमखिलशुभगुणाङ्के १२ ॥
प्रमुदितसकलमनसि परदलनेऽलम् १६
प्रतिलवमटतु मनुजरुचिररुहकिल समाजे २०। १६ ॥

आदौ चेत्प्रत्यापीडः ॥ २२ ॥

यदि नियताऽक्षराणां चतुर्णां पादानामादौ गुरुद्वयं नियमेन स्यात्तदत्र प्रकरणे प्रत्यापीडेति संज्ञां लभते। आदौ गुरुद्वयनियमाच्छेषाणां लघुत्वम्। यथा—

चेतः किल मुदयति ८
रम्यं गुरुकुलमुपगिरिनदि १२ ॥
शश्वच्छुभजनलघुतरसुतवरकृत १६
वेदाभ्यसनमननियमयमजपहवनमति ॥ २० ॥

प्रत्यापीडो गावादौ च ॥ २३ ॥

यदि नियताऽक्षराणां चतुर्णां पादानामादावन्ते च गुरुद्वयं नियमेन स्यात्तदस्मिन्नधिकारे प्रकारान्तरेण प्रत्या-

पीडमेव भवति। आदावन्ते च गुरुद्वयनियमनान्मध्यगतानां लघुत्वम्। यथा–

लोके प्रतिदिनमेकम् ८
नव्यं चरितमनुभवति तच्चेत् १२ ॥
सभ्यैरनुगतमितरमनुजनिचयैस्तैः १६
सेव्यं यदि परिहितमधिगतमपि लघुतरमुज्झम् ॥ २० ॥

प्रथमस्य विपर्यासे मञ्जरी-लव-ल्यऽमृतधाराः ॥ २४ ॥

आपीडग्रहणन्तेनैव सह लघ्वक्षरनियमनं च गतम्। सामान्येनाऽत्र गुरुलघुविन्यासदर्शनात्। एतावता पूर्वोक्तमेव पदचतुरूर्ध्वं प्रथमस्य पादस्य विपर्यासे, मञ्जरी-लव-ल्यऽमृतधारेति नामत्रयं लभते। विपर्यासोव्यत्ययः। स च नियताऽक्षरपादस्थले पादान्तरविन्यासरूपएव। विषमवृत्ते पादसङ्करविषयकमेतत्सूत्रम्। नियतपादविषयकप्रकरणं तु पूर्वमेवोपन्यस्तम् ॥

व्यत्ययश्च–प्रथमपादस्य यथासंख्यं द्वितीयत्वे मञ्जरीत्वं, तृतीयत्वे लवलीत्वं, चतुर्थत्वेऽमृतधारात्वम् ॥

तत्र क्रमेणाद्या–द्वादशाऽक्षराऽष्टाक्षरषोडशाऽक्षरविंशत्यऽक्षरपादैर्घटिता मञ्जरी, यथा–

न भवति पुरुषाणां मुक्तिर्लोके १२
निजनिजकर्माबन्धैः ८ ॥
सावधिका यदि कथमपि सा प्रभवति चेत् १६
पुनरपि बन्धनमुपदिशति सह योगमलं याता ॥२०॥

एवं क्रमेण द्वादशाऽक्षरषोडशाऽक्षराऽष्टाक्षरविंशत्यऽक्षर पादैर्घटिता लवली, यथा–

येयं नवीनवेदान्तवादिलोकै–१२
र्जीवेश्वरैक्यपरता नितरामुपपादिता १६ ॥
सा न कथञ्चित्सफला ८
द्वविध्यविधायकोस्ति यत्तयोर्बहुभेदविचारोद्भेदः ॥२०॥

तथैव क्रमेण द्वादशाऽक्षरषोडशाऽक्षरविंशत्यऽक्षराऽष्टाऽक्षरपादैर्घटिताऽमृतधारा, यथा–

जीवेश्वरप्रकृतिविषयएव १२
कपिलाचार्येण सांख्यविषये नितरामुक्तः १६ ॥
बन्धाऽबन्धविपर्ययविनाशएवात्र मूलकारणत्व–२०
मिति तत्र विनिश्चितम् ८ ॥

अत्र हलायुधेन निजवृत्तौ यदुक्तं [केचिदापीडादिष्वपि पादविपर्यासे सति मञ्जर्यादिना[illegible]नीच्छन्तीति] तदसमञ्जसम्। आपीडप्रत्यापीडादौ आदावन्ते आद्यन्तयोश्च गुरुद्वयानन्तरं शेषाणां मध्यगतानाञ्च लघुनियमकरणात्, शेषाणां मध्यगतानाञ्च लघुत्वकरणं सूत्रयोर्मध्ये गुरुनियम प्रसङ्गे आद्यन्तग्रहणादेव ज्ञापितम्। मञ्जर्यादौ तु पदचतुरूर्ध्वंवल्लघुगुरुनियमाऽभाव इति प्राक् प्रतिपादितम्। किंच–मञ्जरीसूत्रे [आपीडग्रहणं तेनैव सह लघुगुरुनियमश्च निवृत्तः] इति निजग्रन्थ एव परस्परविरोधापत्तिस्तेन निदर्शिता। अत आपीडादौ मञ्जर्याद्यारोपणमशुद्धम् ॥

यच्च वृत्तरत्नाकरटीकाकृता रामेश्वरभट्टसूनुना नारायणभट्टेन निजटीकायां समुक्तम् [आपीडवत्पदचतुरूर्ध्वेऽपि पादव्यत्यासे मञ्जर्यादिभेदा इति] तत्तु बुद्धिमान्द्यमूलकमेव। तच्च बुद्धिमान्द्यं [स्वामऽनिरुध्य बुद्धिमिति] मङ्गलान्ते वदता तेन स्वयं प्रतिपादितम्। बुद्धिरोधमन्तरा तत्र तत्र पतनमेव सम्पाद्यते ग्रन्थकर्तृभिः। यथेदम् ॥

तेन च आपीडस्यैव व्यत्ययान्मञ्जर्यादीनां कल्पनं विहितम्। प्रत्यापीडनन्तु विस्मृतमेव। आपीडवत्पदचतुरूर्ध्वमिति कथनादनुमीयते वृत्तिकृतं गुरुलघुनियमनं तत्र तत्र नाऽनेन दृष्टमिति। कथमन्यथा आपीडपदचतुरूर्ध्वयोरैक्यं विदध्यात्। तयोर्मध्ये तु गुरुलघुनियमाऽनियमएव द्वैविध्यं विदधाति। मञ्जर्यादीनां तु पदचतुरूर्ध्ववद् गुरुलघुनियमाऽभाव एव नितरामापीडभेदकः। वस्तुतस्तु सर्वमप्येतद्धलायुधनारायणभट्टयोः कथनं सूत्रविरुद्धमिति मत्वा सर्वैरप्युपेक्ष्यम्॥

कविवरविरचितवैदिकपिङ्गलछन्दोविवेचनाऽवसरे।
पदचतुरूर्ध्वप्रकरणमवसितिमाप्तं विदन्त्वार्याः॥

साम्प्रतं विषमवृत्तेषूद्गताधिकारः प्रस्तूयते, तमेवाह—

उद्गतामेकतः स् जौ स् लौ न् सौ ज् गौ
भ् नौ ज् लौ ग्—स् जौ स् जौ ग् ॥२५॥

स ज स ल—घटितप्रथमपादवर्ती न स ज ग—घटितद्वितीयपाद [दां] वर्ती, भ न ज ल ग—घटिततृतीयचरणां, स ज स ज ग—घटितचतुर्थाङ्घ्रिमुद्गतामेकतः पठेदित्यर्थः॥

एकत इत्येकशब्दोभावप्रधानस्तृतीयार्थे च तसिः। तथा चैक्येनेत्यर्थः। ल्यब्लोपे पञ्चमी। प्रथमं चरणं द्वितीयचरणेनैकीकृत्य पठेदित्याशयः। एतावता यतिः सर्वत्र पादान्ते इति वक्ष्यमाणपारिभाषिकवचनस्य पुरस्तादपवादभूतोयं विषयः॥

उपस्थितप्रचुपितसूत्रात्सिंहावलोकनन्यायेनाद्य इत्यऽस्याऽनुवृत्तौ प्रथमपादस्यैव द्वितीयपादेनैक्यं, न द्वितीयस्यापि तृतीयेन सहेति समायातम्॥

एवञ्च प्रथमद्वितीयपादयोर्द्वादशाऽक्षरत्वं, तृतीयस्यैकादशाऽक्षरत्वं, चतुर्थस्य च त्रयोदशाऽक्षरत्वमिति वैषम्याद्विषमोयमधिकार इति सिद्धम्। यथा—

"निगमोद्धताथमपरापि नियमरुचिरा बलान्विता।
मूर्त्तिविलयघटनाऽनुगता परिवर्धतां किल समाजवल्लरी"॥१॥

## तृतीयस्य सौरभकं नौ भ् गा॥ २६॥

तृतीयस्येति कथनात्पादत्रयमुद्गतावत्। केवलं तृतीये विशेषः। यद्युद्गतायास्तृतीयपादे र न भ गाः स्युस्तदा सौरभकमिति नामान्तरं सैवोद्गता लभते। यथा—

"प्रतिषेधितोपि वचनेन किमिति जडपूजने रतः।
एतदेव तव दौर्व्यसनं यदिहोद्गतार्थ इव नावगम्यते"॥२॥

## ललितं नौ सौ॥ २७॥

पूर्वोक्तलक्षणलक्षिताया उद्गतायास्तृतीयपादे यदा नौ सौ भवतस्तदा सैवोद्गता ललितमिति नामान्तरं लभते। यथा—

"नितरां जितेन्द्रियमगाधविमलविषयं दयान्वितम्।
परहितपरमतिधैर्ययुतं पुरुषं कदापि नहि यान्ति दुर्गुणाः"३

रचिते कविरत्नेन दुस्तरे भाष्यविस्तरे ।
ललिताक्षरबन्धापि साम्प्रतं सोद्धृता गता ॥

अतः परं विषमवृत्तेषूपस्थितप्रचुपिताधिकारः प्रस्तूयते, तमेवाह—

उपस्थितप्रचुपितं पृथगाद्यं म्सौ ज्भौ गौ
स्त्रौ ज्रौ ग् नौ स् नौ न् ज्यौ ॥ २८॥

पृथगाद्य इति कथनमेकत इति निरासार्थम् । यत्र प्रथमे पादे मसजभगगाः स्युर्द्वितीये सनजरगास्तृतीये ननसाश्चतुर्थे नननजयास्तद् वृत्तमुपस्थितप्रचुपितमिति भवति ॥

आद्यं चरणं पृथक् पठित्वा चरणत्रयमविरामेण पठनीयम् । न तेषु प्रतिचरणं विरामः कार्य इति भावः । एतावता श्लोकार्द्धं तु विशेषत इति पारिभाषिकवचनस्य पुरस्तादऽपवादोयमिति बोध्यम् ॥

एवं चतुर्दशाऽक्षरत्रयोदशाऽक्षरनवाऽक्षरपञ्चदशाऽक्षरपादवदुपस्थितप्रचुपितम् । यथा—

"आर्याणामियमेव सा फलागमच्चेष्टा ।
यदरं निखिलगुणोद्गमाऽनुवृत्तिः नवगुरुकुलरचना ।
परमतविदलनघटनापि च योग्या" ॥ १ ॥

वर्धमानं नौ स्त्रौ न्सौ ॥ २९ ॥

तृतीयस्येति वर्तते । यर्हि पूर्वलक्षणलक्षितस्योपस्थितप्रचुपितस्य तृतीयपादे ननसनननसाः स्युस्तर्हि तदेवोपस्थितप्रचुपितं वर्धमानमिति नामान्तरं लभते । तृतीयपादे विशेषाच्छेषं पूर्ववत् । यथा—

"रामाद्या अपि येऽभवन्नहो धरणीशाः ।
परमेश्वरतुलना न तेषु योज्या ॥
यदि किल गुणसमता कथमिह तद्गुणता ।
निजहृदि परमपवित्राभे परिबोध्यम्" ॥ २ ॥

शुद्धविराड्‌ऋषभं तजूः ॥ ३० ॥

पूर्वोक्तलक्षणलक्षितस्योपस्थितप्रचुपितस्य यदा तृतीय पादे तजराः स्युस्तदा तदेवोपस्थितप्रचुपितं शुद्धविराड्‌ऋषभमिति संज्ञान्तरं लभते । यथा–

"धन्येयं समयोचिता समुन्नतिरग्र्या
बहुसज्जनविततता समाजरूपा ।
वेदाङ्गविकाशभास्वरा मुदयति
हृदयमतितरां सुकवीनाम्" ॥ ३ ॥

"श्री विष्णुदत्तपदपङ्कजलब्धविद्यो
यद्भाष्यरत्नमकरोत्कविरत्ननामा ।
नामान्तरेण घटिकाशतकस्तदस्मिन्
पूर्तिं गतोविषमवृत्तमहाधिकारः" ॥

निवृत्त उपस्थितप्रचुपिताधिकारः । साम्प्रतम् अर्द्धसमवृत्ताधिकारः प्रस्तूयते, तमेव सूत्रमुखेनाह–

अर्द्धे ॥ ३१ ॥

अधिकारोयमापञ्चमाध्यायपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामस्तदर्द्धे एव वेदितव्यम् । प्रागुच्चावचानि वृत्तानि निगदितानि, साम्प्रतं नियमेन कथ्यन्ते । उच्चावचत्वञ्चाऽनियताऽक्षरघटितपादानुकूलतत्तद्वृत्त कथनम् ॥

उपचित्रकं सौ स्लौ गू–भौ भ्गौ गू ॥ ३२ ॥

यत्र प्रथमे पादे ससससलगाः स्युर्द्वितीये च भभभगगा स्तद्वृत्तमुपचित्रकं नाम। अर्द्धशब्दस्य समप्रविभागार्थकत्वाद् द्वितीयमप्यर्धन्ताद्वृत्तमेव। अतएवाऽयमर्धसमाधिकारः। यथा–

"उपचित्रकमत्र विराजते मान्यकुले जननं परतघ्न।
निजधर्मपरत्वमनारतं कीर्तिकरं नवकाव्यमदघ्न" ॥१॥

द्रुतमध्या भौ भू गौ गू–नू जौ ज्यौ ॥ ३३ ॥

यत्र प्रथमे पादे भभभगगाः स्युर्द्वितीये च नजजया-स्तद्वृत्तं द्रुतमध्या नाम। यथा–

"वैदिकशब्दगतिर्बहुगूढा इति हि वदन्ति मृषा किल मूढाः।
निर्मलचित्तवतां नहि कश्चिद्भवति कथंचिदपोह विशेषः"॥२॥

वेगवती सौ सू गौ–भौ भू गौ गू ॥ ३४ ॥

यत्र प्रथमे पादे सससगाः स्युर्द्वितीये च भभभगगा-स्तद्वृत्तं वेगवती नाम। यथा–

"अयि मान्यमहाशय एनां वाक्यततिं नितरां कुरु चित्ते।
बहुमान्यकरी किल याऽलं वेदमयी कथिता गुरुभावे"॥३॥

भद्रविराट् तू जौ गौ–मू सौ जू गौ गू ॥ ३५ ॥

यत्र प्रथमे पादे तजरगाः स्युर्द्वितीये च मसजगगास्तद् वृत्तं भद्रविराडिति संज्ञां लभते। यथा–

"यच्चित्तपथे शुभाऽस्ति विद्या हस्ते दानपरम्परा वा।
विश्वेप्यखिले स एव वन्द्यो यास्काचार्य इवातिरम्यवृत्तः" ॥४॥

केतुमती सू जौ सू गौ–भौ नू गौ गू ॥ ३६ ॥

यत्र प्रथमे पादे सजसगाः स्युर्द्वितीये च भरनगगास्तद्वृत्तं केतुमतीति संज्ञां समेति । यथा–

"कृतकार्य एव फलमच्छं योग्यतया समेति बहुदुःखैः ।
यदि वञ्चितोपि नहि धैर्याद्वेदपथात्कदापि पतितश्चेत्" ॥५॥

आख्यानिकी तौ जू गौ गू–जू तौ जू गौ गू ॥ ३७ ॥

यत्र प्रथमे पादे ततजगगाः स्युर्द्वितीये च जतजगगास्तद्वृत्तमाख्यानिकी नाम । यथा–

"वेदावली मङ्गलमन्त्रपाठैः समाजमध्ये मुदमादधाति ।
व्याख्यानभाजां विदुषां सुपङ्क्तिर्महोपदेशाय समुत्थिता चेत्"६

विपरीताख्यानिकी जू तौ जू गौ गू–तौ जू गौ गू ॥ ३८ ॥

यत्र प्रथमे पादे जतजगगाः स्युर्द्वितीये च ततजगगास्तद्वृत्तं विपरीताख्यानिकी नाम । यथा–

"मुधैव लोकाः प्रवदन्ति लोके नो कोपि वक्तेति समक्षमेतत् ।
हितार्थवाचां कथनं कथं स्याल्लोकावली चेद्विपरीतवृत्तिः" ७

हरिणप्लुता सौ स्लौ गू–नू भौ भ्रौ ॥ ३९ ॥

यत्र प्रथमे पादे सससलगाः स्युर्द्वितीये च नभभरास्तद्वृत्तं हरिणप्लुता नाम । यथा–

"यदि सर्वजनेष्वपि सुस्थिरा मतिरतर्कितमेव तदा शुभम् ।
मतवादपथैः किल चञ्चला भवति लोकमतिर्हरिणप्लुता" ॥८॥

अपरवक्त्रं नौ लौ गू–नू जौ जू रौ ॥ ४० ॥

यत्र प्रथमे पादे ननरलगाः स्युर्द्वितीये च नजजरास्तद्वृत्तमपरवक्त्रं नाम । यथा–

" यदि किल युगलेन चक्षुषोः
सकृदपि सद्गुरुरीक्षयेज्जनम् ।
न पुनरपरवक्त्रमीक्षयेद्
बहुविधमानवसङ्गतं जनः " ॥ ९ ॥

पुष्पिताग्रा नौ यौँ—नू जौ ज्रौ गू ॥ ४१ ॥

यत्र प्रथमे पादे ननरयाः स्युर्द्वितीये च नजजरगा स्तद्वृत्तं पुष्पिताग्रा नाम । यथा—

" अधिगतनिगमा गुणोज्ज्वलाङ्गी
यमनियमप्रतिपालनाऽनुलग्ना ।
गुरुकुलसमितिः समाजभाजां
भवतु सुखाय लतेव पुष्पिताग्रा " ॥ १० ॥

यवमती जौं जौँ—ज्रौ ज्रौ गू ॥ ४२ ॥

यत्र प्रथमे पादे रजरगाः स्युर्द्वितीये च जरजरगा स्तद्वृत्तं यवमतीति संज्ञां लभते । यथा—

" भाष्यरत्नमीदृशं मुखे विभाति
नवीनपद्मसुन्दरं करेपि यस्य ।
निश्चयेन सत्वरं कवित्वमेति
समस्तलोकविश्रुतं सुखेन सोऽलम् " ॥ ११ ॥

शिखैकोनत्रिंशदेकत्रिंशदन्ते गू ॥ ४३ ॥

यत्र प्रथमे पादे एकोनविंशतिवर्णाः स्युर्द्वितीये चैकत्रिंशत्तयोरप्यन्ते प्रत्येकमेकोगुरुश्च स्यात्तद् वृत्तं शिखा नाम । अन्ते गुरुनियमादन्येषां लघुत्वम् । अधिकारनियमादुत्तरा-

Digitized by Arya Samaj Foundation Chennai and eGangotri



र्द्धमपि तादृशमेव। तत्राद्यपादेऽष्टाविंशतिर्लघवो गुरुश्चैको, द्वितीये त्रिंशल्लघवोगुरुश्चान्तेऽवगन्तव्यः। निदर्शनं यथा—

" यदुदितमिह मुनिभिरखिलगुण
सदनमनघविषयमघहरमहो।
ऋषिभिरपि विविधविषयमनन
पटुभिरितरजनहृदयविमलकृतये॥
तदनुगतमनुवसति यदि सकल-
मनुजवटुभिरधिकविमलतया।
जननिजनकगुरुवरपरिचरणमधि
क्रियत इति भवति बहु ननु फलम्" ॥ १२ ॥

यद्यपीयं शिखा [मात्राछन्दसाम्प्रसंगे] चतुर्थाऽध्याये गीत्यार्याभेदेषु निर्दिष्टा, तथापि विषयद्वैविध्यान्नामैक्येपि न द्विरुक्तिः। प्रकृतं चेदमक्षरवृत्तानां प्रस्तावेऽर्द्धसमवृत्त प्रकरणम्। उदाहरणपद्ये अनुवसतीति पदस्य प्रतिपुर-मित्यर्थोऽवधेयः॥

खञ्जा महत्यऽयुजीति ॥ १४ ॥

प्रथमे तृतीये च पादे ( महति ) बह्वक्षरे एकत्रिंश-दक्षरात्मक इति यावत्। द्वितीये चतुर्थे च पादे लघावे-कोनत्रिंशदक्षरात्मके सति, सैव पूर्वलक्षणनिर्दिष्टा शिखा खञ्जेति नामान्तरं लभते। गुरुलघुनियमश्च पूर्ववदेव। निदर्शनं यथा—

"सकलनिलय ! परमकरुण !
विकलशमन ! नियमजनक ! विनतशरण ! हे !।

CC-0. Gurukul Kangri Collection, Haridwar

निगमकथक ! हवनपरक !
परमविभव ! जनकजनक ! भयहर ! भोः ! ॥
विलर सदयनयनपतनमिह नु
जगति नियतिवशत इति ह वचनता ।
मम तु सततमहह विनतिरपि
च न परकथनमजर तव पुरतः" ॥ १३ ॥
"पिङ्गलाचार्यनिर्दिष्टच्छन्दःसूत्रमहार्णवे ।
गतोऽर्द्धसमवृत्तानामधिकार इति स्फुटम् " ॥

इति श्रीमद्वर्द्धमानकविरत्नाऽखिलानन्दशर्म
प्रणीतवैदिकभाष्योपेते छन्दःसूत्रे
वक्रप्रकरण–विषमार्द्धसमवृत्त
विवेचनं नाम पञ्चमोऽध्यायः
प्रस्फूर्तिमगमत् ॥ ५ ॥

# अथ षष्ठोऽध्यायः

इतेऽध्याये विषमार्धसमवृत्तयोर्निर्वचनं विहितमिदानीं समवृत्तनिर्देशाय यतिनिर्णयपुरःसरं षष्ठमऽध्यायमारभते ॥

यतिर्विच्छेदः ॥१॥

यतिरित्यधिकार आसप्तमाऽध्यायपरिसमाप्तेः । विच्छिद्यते विभज्यते पदपाठोऽस्मिन्निति विच्छेदो विरामस्थानं तदेव यतिशब्देनोच्यते। वस्वादिशब्दाः साकाङ्क्षत्वाद्यतिमेवाश्रयन्त इति मत्वा तैरुपलक्षितेष्वक्षरेषु विश्रामः कार्य इति भावः । इयञ्च यतिः श्रुतिसौकर्यार्थं नियतस्थानेषु कर्तव्या । नियतन्तु जिह्वेष्टविश्रामस्थानमेव। विशेषतो यतिनियमनं तत्र तत्र सूत्रकारैर्निदर्शितमेव। सामान्यतया तन्नियमनन्तु परिभाषापद्याभ्यामुपनिबध्यते । तद्यथा–

"यतिः सर्वत्र पादान्ते श्लोकार्द्धे तु विशेषतः ।
क्वचित्पादत्रयस्यान्ते सा मता विषमादिषु ॥ १ ॥
दृश्यते पदमध्येऽपि शक्वर्यादौ समस्थले ।
यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ" ॥२॥ इति ॥

तत्र [ यतिः सर्वत्र पादान्ते ] इति प्रायः समवृत्तपरकम्। विषमवृत्ते तु "उद्गतामेकतः" इति सूत्रे प्रथमद्वितीय चरणयोरऽविरामेणोक्त्या नियमभङ्गप्रसङ्गात् ॥

"श्लोकार्द्धे तु विशेषत" इत्यर्द्धसमवृत्तपरकम्। 'विशेषत' इति कथनात्सामान्यतया तदर्धेऽपि विरामोपपत्तिः। "क्वचित्

पादत्रयस्यान्ते" इति विषमवृत्तपरम्। उपस्थितप्रचुपितादौ प्रथमं चरणं पृथक् पठित्वा चरणत्रयस्यैकदैव पठनविधान दर्शनात्। वसन्ततिलकादौ समवृत्ते–पदमध्येऽपि पादान्तगे यतिः कर्तव्येति परिभाषाया अभिप्रायः। उदाहरणं त्वस्य मत्कृते "आर्यशिरोभूषणकाव्ये" द्रष्टव्यम्। अत्रापि भाष्ये तत्र तत्रोक्तं निदर्शयिष्यते च ॥

श्वेतमाण्डव्यादीनां मते सर्वथा यत्यऽभावः। सैतवादीनां मते पादान्त एव यतिः। भरतमुनेर्मते श्वासविच्छित्तिरेव विरामस्थलम्। सर्वमप्येतत्तत्रतत्राऽवसरे माननीयम्। यथोत्तरं मुनीनां प्रामाण्यात्। अतएव भर्तृहरिणा [लभेत सिकतासु] इति पद्ये प्राप्तेपि पिङ्गलानुरोधात्पृथ्वीवृत्तेऽष्टमाक्षरे विश्रामे भरतमाण्डव्यमतानुरोधाद्विश्रामाऽभावः कृत इति दिक् ॥

यतिश्चेयं वृत्तस्वरूपाद्भिन्नापि गुणालङ्कारादपेक्षया तदन्तःपातित्वात्सूत्रकारैर्लक्षणमध्ये निबद्धा, न तु वृत्तस्वरूपतया। गणमात्रागुरुलघुनियमनं वृत्तलक्षणं विरामात्मकत्वञ्च यतेः। अतएव महर्षिणा यास्केन काव्यालङ्कार सूत्रेषु न वृत्तदोषात्पृथग्यतिदोषोवृत्तस्य यत्यात्मकत्वादिति सूत्रमुखेन शङ्कामुत्थाप्य, 'न लक्ष्मणः पृथक्त्वा'दित्यग्रिम सूत्रेण समाधानं विहितम् ॥

सरसः पदगतरसापेक्षी विरामएव यतिस्थलमिति यास्कमुनेर्मतम्। अतएव [विरसविरामं यतिभ्रष्टम्] इति तैः प्रतिपादितम्। छन्दोविचितेर्वृत्तसंशयच्छेद इति कथनेनैकमत्यं स्वस्य पिङ्गलाचार्यस्य च निदर्शितम्। सर्वमप्ये-

तन्मत्कृते काव्यालङ्कारसूत्रभाष्ये विस्तरेण द्रष्टव्यम् । एवं यतिनिर्णयं विधाय, साम्प्रतं समवृत्तानि वक्तुमारभते—गः श्रीरित्यादिना ॥

यत्तु हलायुधेन—पूर्वं गायत्रे तनुमध्यावृत्तमुदाहृतं तदऽसत् । [ सुप्रतिष्ठाप्रतिष्ठामध्यात्युक्तोक्तास्तथैवेति ] चतुर्थाऽध्यायसूत्रे उक्तादीनां प्राग्ग्रहणात् । तथैव च [ द्विकौ ग्लौ ] इति सूत्रेऽष्टमाध्याये प्रागेकाऽक्षरप्रस्तारप्रतिपादनात् । यद्युक्तायाः पूर्वं ग्रहणं न स्यात्तर्हि कथमेकाऽक्षरप्रस्तारः पूर्वं स्यात् । एकाक्षरात्पादादारभ्य षड् विंशत्यक्षरपादपर्यन्तं कुतश्च वृद्धिः स्यात् । कथञ्चेतरच्छन्दोग्रन्थेषु पूर्वमेकाक्षर पादकल्पनं स्यात् । नह्यऽमूला प्रसिद्धिरिति नियमात् । अतः पूर्वं गायत्रोदाहरणमऽसत् । उक्तोदाहरणस्यैव पूर्वं युक्तत्वात् । अलं बराकोपरि बहुतरकटाक्षनिक्षेपेण । प्रकृतमनुसरामः । यद्यपि वक्ष्यमाणरीत्या समवृत्तानां प्रस्तारे कृते सति पर्यन्तो न दृश्यते, तथापि शिष्येभ्योरीतिप्रदर्शनाय महर्षिः कानिचिद् वृत्तलक्षणानि वक्तुमुपक्रमते—

गः श्रीः ॥ २ ॥

एकाऽक्षरपादे उक्ताधिकारे यदि पादतांगतएकोवर्णो गुरुः स्यात्तद् वृत्तं श्रीरिति संज्ञां लभते । समवृत्ताऽधिकारे पूर्वं श्रीवृत्तस्यैव ग्रहणादाचार्यो मङ्गलमध्यतामस्मिञ्छास्त्रे निदर्शयति । मङ्गलमध्यानि शास्त्राणि प्रथन्त इति पतञ्जलि वचनात् । उदाहरणमप्यस्य पूर्वं वेदोक्तमेव । यथा—

" ओं खं ब्रह्म " ॥ १ ॥

अत्र चतुर्थाऽक्षरस्य पादान्ते वर्तमानत्वाद् गुरुत्वम्। प्रस्तारे कृते चाऽत्र भेदद्वयं भवति ॥ [ २ ] ॥

धी गौं ॥ ३ ॥

द्व्यऽक्षरपादे अत्युक्ताधिकारे यदि पादतांगतौ द्वौ वर्णौ गुरू स्यातां तद् वृत्तं धीर्नाम। यथा—

" वन्दे। विद्यां। विश्वे। वन्द्याम् " ॥ २ ॥

प्रस्तारे कृते चाऽत्र भेदचतुष्टयं भवति ॥ ४ ॥

अन्यदपि प्रस्तारजन्यं द्व्यऽक्षरपादं वृत्तमऽत्राऽधिकारे ऽवगन्तव्यम् ॥

मः स्त्री ॥ ४ ॥

त्र्यऽक्षरपादे मध्याऽधिकारे यदि पादतांगत एकोमगणः स्यात्तद् वृत्तं स्त्री नाम। यथा—

" धन्यानां–वाणीभि–श्छिद्यन्ते–हृन्मोहाः " ॥ ३ ॥

अत्र प्रस्तारे कृते सति समवृत्तभेदा अष्टौ भवन्ति ८ मगणस्य शुभत्वाद् भूमिदैवतत्वाच्च भूतलवासिनां प्रमोदाय सर्वगणेभ्यः पूर्वं समवृत्ताऽधिकारे प्रयोगः। वृत्तान्तरमपि त्र्यऽक्षरपादं प्रस्तारोद्भूतमऽत्र विबोध्यमऽधिकारे ॥

म् गौ सुमतिः ॥ ५ ॥

चतुरऽक्षरपादे प्रतिष्ठाऽधिकारे यदि प्रथमचरणे मगणगुरू स्यातां तद् वृत्तं सुमतिर्नाम। यथा—

"श्रेष्ठा लोके–साऽऽर्यश्रेणी। सेव्या सर्वै–र्मान्यैर्लोकैः" ॥ ४ ॥

अत्र प्रस्तारे कृते सति समवृत्तभेदाः षोडश भवन्ति ॥ १६ ॥

अन्यदप्येतावदक्षरपादं प्रस्तारगतं वृत्तमत्राधिकारे समूह्यम् ॥

पङ्क्तिर्भ् गौ ग् ॥ ६ ॥

पञ्चाऽक्षरपादे सुप्रतिष्ठाऽधिकारे यस्यास्पादे भग-णात्परं गुरुद्वयं स्यात्तद् वृत्तं पङ्क्तिर्नाम । यथा-

" आर्यसमाजे-पण्डितपङ्क्तिः ।
सुन्दरवेषा-चारु विभाति " ॥ ५ ॥

अत्र प्रस्तारे कृते सति ३२ एतावन्ति समवृत्तानि भवन्ति । अन्येषामप्येवंविधपादानामत्र समावेशः ॥

तनुमध्या त्यौ ॥ ७ ॥

षडऽक्षरपादे गायत्र्यऽधिकारे यदि पादे तगणयगणौ स्यातां तदा तनुमध्येति वृत्तम् । यथा-

" येयं किल लोके-पूजा जडमूर्तेः ।
साऽलं नरकाणां-द्वारं तरलानाम् " ॥ ६ ॥

अत्र पर्यन्तं पादान्ते यतिः । समवृत्तभेदाश्चाऽत्र प्रस्ता-रेण ६४ एतन्मिताः । षडऽक्षरपादमन्यदप्यत्रोह्यम् ॥

कुमारललिता ज् सौ ग् ॥ ८ ॥

सप्ताऽक्षरपादे उष्णिगऽधिकारे यत्रास्यचरणे जसगाः स्युस्तद् वृत्तं कुमारललितेति कथ्यते । यथा-

" मदीयकुलिमध्ये-नितान्तमनुरागम् ।
कुमारललिता सा-करोतु विबुधाली " ॥ ७ ॥

अत्र प्रस्तारे कृते सति समवृत्तभेदाः १२८ एतावन्तो भवन्ति । भेदाऽन्तरमऽपीदृशमऽत्रोह्यम् ॥

अतः परं प्रत्यऽधिकारं वृत्तानां बाहुल्यात्पृथगधिकार निर्देशः । तत्राऽष्टाक्षरपादेऽनुष्टुबऽधिकारे वृत्तान्यारभते-

## माणवकाक्रीडितकं भ् तौ लगौ ॥ ९ ॥

यत्र पादे भतलगाः स्युस्तद्वृत्तं माणवकाक्रीडितकं नाम । चतुर्भिश्चतुर्भिर्यतिः । यथा—

"ये मनुजामूर्त्तिपथं–स्त्वरिता लोभवशात् ।
नैव जहत्यत्र भवे–माणवकास्ते परमाः" ॥ ८ ॥

## चित्रपदा भौ गौ ॥ १० ॥

यत्र पादे द्वौ भगणौ द्वौ च गुरू स्यातां तद्वृत्तं चित्रपदेति नाम लभते । पादान्ते यतिः । यथा—

"मित्र भवे कुरु दानं–मा कुरु कालविलम्बम् ।
चित्रपदा मनुजाना–मत्र मता दिनपङ्क्तिः" ॥९॥

## विद्युन्माला मौ गौ ॥ ११ ॥

यत्र पादे द्वौ मगणौ द्वौ च गुरू स्यातां तद्वृत्तं विद्युन्मालेति भवति । चतुर्भिश्चतुर्भिर्यतिः । यथा—

"विद्याऽभ्यासे यैर्यैर्लोकै–र्बाल्यावस्था नीता दैवात् ।
ते ते धन्या विश्वे मान्या–विद्युन्माला-वद्भासन्ते" ॥१०॥

## हंसरुतं म्नौ गा ॥ १२ ॥

यत्र पादे मगणनगणाभ्यां परौ द्वौ गुरू स्यातां तद्वृत्तं हंसरुतं नाम । पादान्ते यतिः । यथा—

"सन्तोषोमनसि सर्वै–राधेयो जगति भव्यैः ।
नादेयः परधनांशो–न त्याज्यो निगममार्गः" ॥११॥

अत्र प्रस्तारे कृते सति समवृत्तभेदाः २५६ एतावन्तो भवन्ति । प्रस्तारजन्यं भेदान्तरमप्येतावन्मितपादं निज नामकल्पितमत्राऽधिकारे बोध्यम् ॥

अतः परं नवाऽक्षरपादे बृहत्यधिकारे वृत्तान्याह—

भुजगशिशुसृता नौ म् ॥ १३ ॥

यत्र पादे द्वौ नगणौ मगणश्चैकः स्यात्तद् वृत्तं भुजगशिशुसृतेति कथ्यते । सप्तभिर्द्वाभ्याञ्च यतिः । यथा—

"इदमधिकतरं पुंसां—महदनुपतनं मन्ये ।
यदनुदिनमहो कृत्ये—प्रतिलवमधिकोरागः" ॥ १२ ॥

हलमुखी नौ म् ॥ १४ ॥

यत्र पादे रगणनगणसगणाः स्युस्तद् वृत्तं हलमुखीति संज्ञां लभते । त्रिभिः षड्भिश्च यतिः । यथा—

"ईश्वरोयदपि सुमतिं शासनादुपदिशति ताम् ।
मानवास्तदपि कुमतिं यान्त्यलं निरयपथगाम्" ॥१३॥

अत्र प्रस्तारे कृते सति समवृत्तसंख्या ५१२ एतावती संपद्यते। अन्यदपि प्रस्तारोद्धृतं निजकल्पितसंज्ञं नवाऽक्षरपादं वृत्तमऽत्राऽधिकारे समवगन्तव्यम् ॥

अतः परं दशाऽक्षरपादे पङ्क्त्यऽधिकारे वृत्तान्याह—

शुद्धविराण्म् सौ ज् गौ ॥ १५ ॥

यत्र पादे मसजगाः स्युस्तद् वृत्तं शुद्धविराडिति संज्ञां लभते । पादान्ते यतिः । यथा—

"कीर्तिस्तिष्ठति भूमिमण्डले नित्या यस्य सएव भाग्यवान् ।
कीटाभा इतरे तु नित्यशः सम्भूतिं मरणं च यान्त्यलम्॥१४॥"

पणवो म्नौ य् गौ ॥ १६ ॥

यत्र पादे मनयगाः स्युस्तद् वृत्तं पणव इति संज्ञां लभते। पञ्चभिः पञ्चभिर्यतिः । यथा—

"सूर्यस्योदयमधिगम्यालं यद्वद् ध्वान्तगपततमसाऽभावः ।
तद्वद्वैदिकमतमेतथाऽरं पोपानामपि बहुधाऽभावः" ॥ १५ ॥

रुक्मवती भ् मौ स् गौ ॥ १७ ॥

यत्र पादे भमसगाः स्युस्तद् वृत्तं रुक्मवतीति समाख्यां लभते । पादान्ते चाऽत्र यतिः । यथा—

"विश्वतले येनोदरहेतोः प्रस्तरपूजाऽऽलम्बनमात्तम् ।
वेदपथान्निर्वासितबुद्धेस्तस्य तु बुद्ध्याऽलं वनमात्तम्" ॥ १६ ॥

मयूरसारिणी जौ गौ ॥ १८ ॥

यत्र पादे रजरगाः स्युस्तद् वृत्तं मयूरसारिणीति संज्ञामुपैति । पादान्ते यतिः । यथा—

"यादृशी भुवस्तले जनानां दृश्यते दरिद्रता नितान्तम् ।
तादृशी यदीश्वरेच्छयाऽलं संभवेत्समृद्धता पुनः किम्" ॥ १७ ॥

मत्ता म् भौ स् गौ ॥ १९ ॥

यत्र पादे मभसगाः स्युस्तद् वृत्तं मत्तेति संज्ञां लभते । चतुर्भिः षड्भिश्च यतिः । यथा—

"मन्त्रोद्धारैः श्रुतिपुटपेयैर्वेदव्याख्याविषयविशेषैः ।
स्वच्छागारे कृतहवनानां हव्योद्गन्धो मुदयति चेतः" ॥ १८ ॥

उपस्थिता न् जौ ज् गौ ॥ २० ॥

यत्र पादे नजजगाः स्युस्तद् वृत्तमुपस्थितेति समभिख्यां लभते । द्वाभ्यामष्टभिश्च यतिः । यथा—

"एषा बहुपुण्यपरिक्रियाल्लोके नवनौरिव मञ्जुला ।
मन्ये नरजन्मसमुद्धृतिर्भाग्यान्मम मित्रमुपस्थिता" ॥ १९ ॥

अत्र प्रस्तारे कृते सति समवृत्तसंख्या १०२४ एतन्मिता भवति । अन्यदप्येकादशाऽक्षरपादं प्रस्तारोद्धृतं वृत्तमत्राऽधिकारे बोध्यम् ॥

अतः परमेकादशाऽक्षरपादे त्रिष्टुबऽधिकारे वृत्तान्याह–

इन्द्रवज्रा तौ ज् गौ ग् ॥ २१ ॥

यत्र पादे ततजगगाः स्युस्तद् वृत्तमिन्द्रवज्रा नाम । पादान्ते यतिः । यथा–

"या वेदबाह्याः स्मृतयोऽत्र लोके याश्चापि धूर्तैरुपकल्पितार्थाः।
व्यर्थागमास्ता नितरामसुत्र सेव्याः परत्रापि न सभ्यवर्यैः." २०

उपेन्द्रवज्रा ज् तौ ज् गौ ग् ॥ २२ ॥

यत्र पादे जतजगगाः स्युस्तद् वृत्तमुपेन्द्रवज्रेति संज्ञां लभते । पादान्ते यतिः । यथा–

"अथोत्सुकः सज्जनसिंहवर्मा दयानिधेरीक्षणवन्दनानाम् ।
निमन्त्रयामास कृते मुनीशं निजे पुरे विश्रुतसत्प्रभावः" ॥२१॥

मत्कृते श्रीदयानन्द विजयमहाकाव्ये पञ्चदशे सर्गे उदयपुरगमनप्रस्तावे पद्यमेतत् ॥

आद्यन्तावुपजातयः ॥ २३ ॥

आद्यन्ताविति कथनादनन्तरोक्ताविन्द्रवज्रोपेन्द्रवज्रयोः पादौ गृह्येते । तौ यदा विकल्पेन यथेष्टं भवतस्तदोपजातयो भवन्ति । पादान्ते यतिः । यथा–

" अस्मिन्कलावुत्तमभागधेयैः
संप्राप्यते ब्राह्मणजन्म मर्त्यैः ।

शुभे कुले कर्मपरत्वभावात्
समोपजातावऽपि तत्र तत्र " ॥ २२ ॥

प्राङ्मात्रासमके संकरोनिदर्शितः पादाकुलकेन। द्वितीयश्च विषमवृत्ते पदचतुरूर्ध्वप्रकरणे मञ्जर्यादौ। तृतीयोयं समवृत्ते उपजातिर्नाम। अत्र प्रथमं पादद्वयमिन्द्रवज्रायाः। द्वितीयं पादद्वयमुपेन्द्रवज्रायाः। समविषमपादयोर्वैषम्येनापि संभवत्युपजातिः। यथा प्रथमतृतीयपादाविन्द्रवज्रायाः। द्वितीय चतुर्थावुपेन्द्रवज्रायाः। यद्वा विषमौ पादावुपेन्द्रवज्रायाः। समौ पादाविन्द्रवज्रायाः॥

यद्येकलक्षणवत्पादत्रयं स्यादेकश्च पादोद्वितीयलक्षण स्तदाप्युपजातयो भवन्ति। तदुक्तं भामहेन—

"एकत्र पादे चरणद्वये वा पादत्रये वान्यतरस्थितिश्चेत्।
तयोरिहान्यत्र तदोहनीयाश्चतुर्दशोक्ता उपजातिभेदाः" २३

अत्रोपजातौ प्रस्तारकरणाच्चतुर्दशभेदा जायन्ते। ते च यथायथमूह्याः। उदाहरणं त्वेषां मत्कृते विरजानन्दचरित काव्ये समीक्ष्यम्॥

एवं वंशस्थेन्द्रवंशापादयोस्तथा शालिनीवातोर्मीपादयोरन्येषां च तत्तदऽधिकारपठितानां गणव्यत्यये सति तुल्याऽक्षरपादवतां समवृत्ताऽधिकारान्तर्गतकृतलक्षणानां वृत्तानां सम्मेलनान्नानाविधा उपजातयः संपद्यन्ते। ताश्च काव्यरचनापटुभिर्वटुभिर्विरचय्य विवेचनीयाः॥

दोधकं भौ भ् गौ ग्॥ २४ ॥

यत्र पादे भभभगगाः स्युस्तद्वृत्तं दोधकमिति निजागद्यते। पादान्ते यतिः। यथा—

" सेवकशिष्यसुतानुगवृत्ता
लोकतले बहवः किल मत्ताः ।
ताननुगानुपगम्य सहस्रे
केऽपि भवन्ति कलाविह मत्ताः " ॥ २४ ॥

शालिनी म्तौ त्गौ ग् समुद्रऋषयः ॥ २५ ॥

यत्र पादे मततगगाः स्युस्तद् वृत्तं शालिनी नाम । अत्र समुद्रोपलक्षितेषु चतुर्षु ऋष्युपलक्षितेषु सप्तसु च यतिः। यथा-

" पूर्वं तावद्वैदिकं कर्म कार्यं
प्रातःकाले सभ्यवर्यैः प्रयत्नात् ।
पश्चात्तल्लौकिकं कृत्यजातं
संद्रष्टव्यं वैदिकोमार्ग एषः " ॥ २५ ॥

वातोर्मी म्भौ त्गौ ग् ॥ २६ ॥

यत्र पादे मभतगगाः स्युस्तद् वृत्तं वातोर्मीति कथ्यते । चतुर्षु सप्तसु च यतिः । यथा-

" यत्कर्तव्यं जगति प्राप्य देहं
तत्त्वं शीघ्रं मनुजाऽलं कुरुष्व ।
अस्मिन्देहे नववातोर्मिमाले
यातायातैरवसानं न लभ्यम् " ॥ २६ ॥

भ्रमरविलसिता म्भौ न्लौ ग् ॥ २७ ॥

यत्र पादे मभनलगाः स्युस्तद् वृत्तं भ्रमरविलसितेति संज्ञां लभते । चतुर्षु सप्तसु च यतिः । यथा-

" सौख्यं लोके विषयजमनिशं
बोध्यं सर्वैर्भ्रमरविलसितम् ।
तस्माद्धर्मौनिजजनिजविभवैः
संसेव्योऽलं किमपरमधिकम् " ॥ २७ ॥

रथोद्धता नौ लौ ग ॥ २८ ॥

यत्र पादे रनरलगाः स्युस्तद् वृत्तं रथोद्धता नाम। पादान्ते चाऽत्र यतिः । यथा—

" ये महेश्वरमपास्य पूजनं
मोहताजडशिलात्मकं श्रिताः ।
ते कदापि परमेश्वरप्रभा-
पात्रताङ्किल न यान्ति मानवाः " ॥ २८ ॥

स्वागता नौ भ्गौ ग् ॥ २९ ॥

यत्र पादे रनभगगाः स्युस्तद् वृत्तं स्वागतेति संज्ञां लभते । पादान्ते यतिः । यथा—

" आर्यवर्यपरिषत्कृतनाना-
विस्तरप्रचितसाधनरम्ये ।
अत्र वार्षिकमहोत्सवमध्ये
स्वागतं भवतु सर्वजनानाम् " ॥ २९ ॥

वृन्ता नौ स्गौ ग् ॥ ३० ॥

यत्र पादे ननसगगाः स्युस्तद् वृत्तं वृन्तेति कथ्यते। अत्र मण्डूकप्लुत्या [ समुद्र ऋषयः ] इत्यनुवर्तनात्तदुपलक्षितस्थल एव यतिः । यथा—

" अधिगतपरिमितसन्तुष्टो
नियमितनिजकृतिसंविष्टः ।
ध्रुवमिह विगलति दुःखेभ्यः
सुमिव पवनहतं वृन्तात् " ॥ ३० ॥

श्येनी जौं लौं गू ॥ ३१ ॥

यत्र पादे रजरलगाः स्युस्तद् वृत्तं श्येनीति निगद्यते । पादान्ते यतिः । यथा–

" अप्रमेयविभ्रमाऽवभासिका
येश्वरेण निर्मिता जगत्कृतिः ।
सेयमऽत्र विस्मयं हृदेऽन्तरे
संदधाति सर्वथैव जन्मिनाम् " ॥ ३१ ॥

विलासिनी जौ ज्गौ गू ॥ ३२ ॥

यत्र पादे जरजगगाः स्युस्तद् वृत्तं विलासिनी नाम । पादान्ते यतिः । यथा–

" महाशयैरुपेक्ष्यते स मार्गो
जडाश्मनां समर्चनं विलोक्य ।
गताशयैरपेक्ष्यते निजार्थे
भवत्यलं पशुत्वमेव यत्र " ॥ ३२ ॥

अत्र प्रस्तारे कृते सति समवृत्तसंख्या २०४८ एतावती निष्पद्यते । अन्यदप्येकादशाऽक्षरपादं प्रस्ताररीत्या संपादितं वृत्तमऽत्राऽधिकारे समालोचनीयम् ॥

अतः परं द्वादशाऽक्षरपादे निम्ननिर्दिष्टाधिकारे वृत्तान्याह–

जगती ॥ ३३ ॥

अधिकारोयमाषष्ठाध्यायपरिसमाप्तेः । यानितोऽग्रे वृत्तानि वक्ष्यामस्तानि जगत्यधिकारे वेदितव्यानि ॥

वंशस्था ज्तौ ज्रौ ॥ ३४ ॥

यत्र पादे जतजराः स्युस्तद् वृत्तं वंशस्थाख्यं भवति। पादान्ते चाऽत्र यतिः ॥

"भवत्यहो यस्य भवेन भूतले भवादृशां भाग्यवशेन भासिता।
भवः स भव्यैरनुभूयते भवे भवन्ति भावेन न के विभासिताः ३३"

इन्द्रवंशा तौ ज्रौ ॥ ३५ ॥

यत्र पादे ततजराः स्युस्तद् वृत्तम् इन्द्रवंशा नाम। पादान्ते चात्र यतिः। यथा–

"लोकेऽत्र येऽधर्मसमाजमाश्रिता नानामतैरन्तरितं जनाधमाः।
मन्ये ततोगोखरतामुपागता मानुष्यतः श्रेष्ठतरा विपर्ययात् ३४"

द्रुतविलम्बितं न्भौ भ्रौ ॥ ३६ ॥

यत्र पादे नभभराः स्युस्तद् वृत्तं द्रुतविलम्बितं नाम। पादान्तेऽत्र यतिः। यथा–

"अथ जयाय दिशां स महामतिर्निजबलेन मनः सु विपक्षिणाम्।
भयमनल्पममन्दमुपादधे रविमहाविमहाः कलयन्दिशः ३५"

मत्कृते श्रीदयानन्दविजयमहाकाव्ये चतुर्थसर्गे लोकदशासमीक्षणप्रसङ्गे सयमकं पद्यमेतत् ॥

तोटकं सः ॥ ३७ ॥

द्वादशाऽक्षरपादे जगत्यधिकारे यावद्भिः सगणैः पाद पूर्त्तिर्जायेत, तावन्मितसगणघटितं तोटकं वेदितव्यम् । पादान्ते यतिः । यथा—

"जगतामधुनाजगदादिकृता जगती अलये प्रविलोक्य दशाम् ।
जनतापनिवारक एकइह जनितः कृपया परया स यतिः ॥३६॥"

पुटो नौ म्यौ वसुसमुद्राः ॥ ३८ ॥

यत्र पादे ननमयाः स्युस्तद्वृत्तं पुट इति निगद्यते । वसूपलक्षिताऽष्टके समुद्रलक्षितेषु चतुर्षु च यतिः । यथा—

"कथमिह न भवेत्सा धर्मिकाणां प्रतिदिनमनुवृद्धिः सर्वभावैः।
घृतमिव परहेतोर्यैः शरीरम् ऋषिवचनकृतार्थैरार्यवर्य्यैः"॥३७॥

जलोद्धतगति र्जसौ जसौ रसर्तवः ॥ ३९ ॥

यत्र पादे जसजसाः स्युस्तद्वृत्तं जलोद्धतगतिर्नाम । रसोपलक्षितेषु षट्सु, ऋतूपलक्षितेषु षट्सु च यतिः। यथा—

"तनोति सकले कलाभिरधिकं यथैव रजनीपतिः प्रमुदितः ।
तथैव मुनिना जगत्यपि कृता प्रकाशविवृतिः किमत्र कथनं३८"

ततं तौ म्रौ ॥ ४० ॥

यत्र पादे ततमराः स्युस्तद्वृत्तं ततमिति भवति । पादान्तेऽत्र यतिः । यथा—

"कुरु पठनमलं विद्योत्कण्ठया नियमपरतया नित्यं पुत्रक ।
गुरुषु परमया भक्त्या सेवनं परमपितुरियं मेऽलं शासना"॥३९॥

कुसुमविचित्रा न्यौ न्यौ ॥ ४१ ॥

यत्र पादे नयनयाः स्युस्तद् वृत्तं कुसुमविचित्रा नाम। षड्भिः षड्भिश्च यतिः। यथा—

"नियमितकाला परिमितवाला
विरचितशाला विगलितजाला।
जनयति चित्ते मुदमयि पूर्णां
गुरुकुलभूमिः कुसुमविचित्रा ॥ ४० ॥"

चञ्चलाक्षिका नौ रौ ॥ ४२ ॥

यत्र पादे ननरराः स्युस्तद् वृत्तं चञ्चलाक्षिकेति कथ्यते। पादान्ते चाऽत्र यतिः। यथा—

"जगति सकलमऽत्र जालप्रभं मनुजमनसि नित्यमालोकय।
विषयसुखमनित्यमस्माद्द्रुतं निगमपरतया भजस्वेश्वरम्॥४१॥"

भुजङ्गप्रयातं यः ॥ ४३ ॥

द्वादशाऽक्षरपादे जगत्यधिकारे यावद्भिर्यगणैः पादपूर्तिर्जायेत, तावन्मितयगणघटितं भुजङ्गप्रयातं समधिगन्तव्यम्। पादान्ते यतिः। यथा—

"अधर्मस्य नाशे विशेषेण रक्तं
निराकारभक्तं गुणेषु प्रसक्तम्।
स्वधर्मेऽनुरक्तं सुखेभ्योविरक्तं
भजेऽहं दयानन्दमीड्यं मुनीशम्" ॥ ४२॥

स्रग्विणी रः ॥ ४४ ॥

द्वादशाऽक्षरपादे जगत्यधिकारे यावन्मितरगणैः पादपूर्तिर्जायेत तावन्मितरगणघटितं स्रग्विणी वृत्तं निष्पद्यते। पादान्ते यतिः। यथा—

"योभवे निर्मलं वस्तुतोनिर्गुणं सर्वथा संस्मृतः शङ्करं निर्जरम्।
मानसेनिश्चयादीश्वरं भावयेत्तं न ते दुर्गुणायान्त्यलं कर्हिचित्४३"

प्रमिताक्षरा स्जौ सौ ॥ ४५ ॥

यत्र पादे सजससाः स्युस्तद् वृत्तं प्रमिताक्षरेति निजागद्यते । पादान्तेऽत्र यतिः । यथा–

" विदुषां हिताय नवकाव्यकृतः
फलिताशयस्य बहुभावभृतः ।
प्रमिताक्षरापि विशदाऽर्थवती
भवताच्छिवाय भवतां मम गीः ॥४४॥ "

कान्तोत्पीडा भ्मौ स्मौ ॥ ४६ ॥

यत्र पादे भमसमाः स्युस्तद्व वृत्तं कान्तोत्पीडेति संभण्यते । पादान्ते चाऽत्र यतिः । यथा–

" दुःखशतैर्व्याप्ता बहु मृत्योर्लीला-
माप्तवती येयं जनिरस्मिँल्लोके ।
सा न भवेच्चेदीश्वरभक्त्या मेऽलं
दुःखविमुक्तः स्यामऽखिलानन्दोऽहम् ॥४५॥ "

वैश्वदेवी मौ यावि न्द्रिय ऋषयः ॥ ४७ ॥

यत्र पादे ममयया: स्युस्तद्व वृत्तं वैश्वदेवीति संज्ञां लभते । इन्द्रियोपलक्षितेषु पञ्चसु सप्तसु च यतिः । यथा–

" लोके धर्मात्मा जायते शुद्धवंशे
नानायोनीनामन्तरे पापकर्मा ।

स्पष्टं सर्वस्मिन्भूतले वाक्यमेत

त्तस्माद्धर्मोऽलं सेव्यतां सर्वलोकैः " ॥ ४६ ॥

वाहिनी त्मौ म्यावृषिकामशराः॥ ४८ ॥

यत्र पादे तमभयाः स्युस्तद्‌ वृत्तं वाहिनी नाम। सप्तसु कामशरोपलक्षितेषु पञ्चसु च यतिः। यथा–

" पूर्वं महीयः पुण्यं यस्याऽत्र लोके

लब्ध्वा विभूतिं मन्ये विस्तारमेति।

सोऽलं कवित्वं मान्यत्वं चापि दैवा

दन्ते यथेच्छं मुक्तत्वं सर्वथैति " ॥ ४७ ॥

नवमालिनी न्जौ भ्याविति ॥ ४९ ॥

यत्र पादे नजभयाः स्युस्तद्‌ वृत्तं नवमालिनीति भवति। अष्टसु चतुर्षु च यतिः। यथा–

" निगमसमाश्रयेण सुजनानां

व्रजति सुखेन काल इति बोध्यम्।

कपटविवादचौर्यमदपानै

रधमजना नयन्ति परतोऽलम् " ॥ ४८ ॥

अत्र प्रस्तारे कृते सति समवृत्तसंख्या ४०९६ एतन्मिता भवति। अन्यदप्येवंविधपादं वृत्तमेतदधिकारान्तर्गतमवगन्तव्यम् ॥

इति श्रीमद्वर्तमानकविरत्नाऽखिलानन्दशर्म

प्रणीतवैदिकभाष्योपेते छन्दःसूत्रे

यति–नियमन–समवृत्तारम्भो

नाम षष्ठोऽध्यायः

॥ ६ ॥

# अथ सप्तमोऽध्यायः

पूर्वस्मिन्नध्याये यतिनियमनोत्तरमेकाऽक्षरपादादुक्ताधिकारादारभ्य द्वादशाक्षरपादजगत्यधिकारपर्यन्तं तानि तानि वृत्तानि संवर्णितानि। साम्प्रतं तेभ्योऽवशिष्टाधिकारान्तर्गतवृत्तानि वर्णयितुं सप्तममध्यायमारभते। तत्र त्रयोदशाक्षरपादे अतिजगत्यधिकारे तावदाचष्टे–

प्रहर्षिणी म्नौ ज्रौ ग् त्रिकदशकौ ॥ १ ॥

यत्र पादे मनजरगाः स्युस्तद्व वृत्तं प्रहर्षिणीति संज्ञां लभते। अत्र त्रिभिर्दशभिश्च यतिः। यथा–

" अत्यन्तप्रहसनपानभोजनाना
मभ्यासाद्भवति महालसत्वमारात्।
तेनाऽलं नियमपराङ्मुखत्वमस्मात्
संत्याज्यं नियमपरैरिदं सदैव " ॥ १ ॥

रुचिरा ज् भौ स् जौ ग् चतुर्नवकौ॥ २ ॥

यत्र पादे जभसजगाः स्युस्तद्व वृत्तं रुचिरेति नाम। चतुर्भिर्नवभिश्च यतिः। यथा–

" मृगत्वचा रुचिरतरासनक्रियः
समाधिभृत्प्रकटितधैर्यसागरः।
ऋचाञ्चये विरचितभाष्यविस्तरः
प्रशान्तये भवतु चिराय सन्मुनिः " ॥२॥

मत्तमयूरं म् तौ य् सौ ग् समुद्रनवकौ ॥ ३ ॥

यत्र पादे मतयसगाः स्युस्तद्वृत्तं मत्तमयूरं नाम। समुद्रोपलक्षितेषु चतुर्षु नवसु च यतिः। यथा—

" वेदोद्गीर्णः शास्त्रसमूहेष्वपि लब्धः
पूर्वैर्लोकैराचरितोऽलं निगमज्ञैः।
स्वस्याभीष्टो मानवधर्मे मनुनाऽलं
धर्मः प्रोक्तो यस्य समस्तेष्वपि गीतिः " ॥३॥

गौरी नौ न् सौ ग् ॥ ४ ॥

यत्र पादे ननसगाः स्युस्तद्वृत्तं गौरीति समाख्यां लभते। पादान्ते चात्र यतिः। यथा—

" अजरमभयमखिलजगदीशं
यजत भजत नमत बहुभावैः।
हवनजपनकवनपरभागै-
रिति ह वदति निगम इति बोध्यम् " ॥ ४ ॥

अत्र प्रस्तारे कृते सति समवृत्तसंख्या (८१९२) एतावती संजायते। अन्यदपि त्रयोदशाऽक्षरपादं वृत्तमत्राधिकारे प्रस्तारजन्यं बोध्यम्॥ अतः परं चतुर्दशाऽक्षरपादे शक्वर्यधिकारे वृत्तान्याह—

असंबाधा म् तौ न् सौ गाविन्द्रियनवकौ ॥ ५ ॥

यत्र पादे मतनसगगाः स्युस्तद्वृत्तमसंबाधाख्यां लभते। इन्द्रियोपलक्षितैः पञ्चभिर्नवभिश्च यतिः। यथा—

" दृष्ट्वा शास्त्राणि प्रतिदिनपरमाभ्यासै-
र्बुद्ध्वा वेदानां परमुपनिषदान्तत्त्वम्।

भूत्वा निःसंगो भवभयमखिलं हित्वा
मत्वा सर्वेशं प्रभवति मनुजोदेवः " ॥ ५ ॥

अपराजिता नौ सौ लगौ स्वरर्क्षयः ॥ ६ ॥

यत्र पादे ननरसलगाः स्युस्तद् वृत्तमपराजिताह्वं भवति। स्वरर्क्ष्युपलक्षितेषु सप्तसु सप्तसु यतिर्यथा–

" द्विजकुलजननं पुनर्निगमागमः
पुनरथ कथनं ततः प्रतिभोदयः ।
इति किल सकलं विना बहुभाग्यतां
भवति हि न सर्वं कदापि विभाव्यताम् " ॥६॥

प्रहरणकलिता नौ भ्नौ लगौ च ॥ ७ ॥

यत्र पादे ननभनलगाः स्युस्तद् वृत्तं प्रहरणकलितेति महर्षिणोक्तम् । सप्तभिः सप्तभिर्यतिः । यथा–

" न भवति विदुषां परिषदि कलहो
न भवति यमिनां परिषदि विषयः ।
न भवति धनिनां परिषदि विघ्नो
न भवति गुणिनां परिषदि विगुणः " ॥ ७ ॥

वसन्ततिलका त्भौ जौ गौ ॥ ८ ॥

यत्र पादे तभजजगगाः स्युस्तद् वृत्तं वसन्ततिलका-ऽभिधं भवति । पादान्ते चाऽत्र यतिः । यथा–

" हे देव देव करुणार्णव दीनबन्धो
सृष्टिस्थितिप्रलयकारणभूतशक्ते ।
दुःखार्णवे निपतितं जगदेतदस्य
शीघ्रं समुद्धर विवर्धय सौख्यजातम् " ॥ ८ ॥

मत्कृते ईश्वरस्तुतिकाव्ये प्रथमं पद्यमेतत् ॥

सिंहोन्नता काश्यपस्य ॥ ९ ॥

पूर्वलक्षणलक्षिता वसन्ततिलकैव काश्यपस्य महर्षेर्मते सिंहोन्नतेति संज्ञां लभते । उदाहरणं पूर्वमेव ॥

उद्धर्षिणी सैतवस्य ॥ १० ॥

पूर्वलक्षणलक्षिता सैव वसन्ततिलका सैतवस्य मुनेर्मते उद्धर्षिणीति संज्ञां लभते । पूर्वमेवोदाहरणम् ॥

मधुमाधवी शाकल्यस्य ॥ ११ ॥

पूर्वलक्षणलक्षिता वसन्ततिलका शाकल्यस्याचार्यस्य मते मधुमाधवीति संज्ञां लभते । पूर्वैवोदाहृतिः । अत्र प्रस्तारे कृते सति समवृत्तसंख्या १६३८४ एतावती संपद्यते । अन्यदपि चतुर्दशाऽक्षरपादं वृत्तमत्राधिकारे बोध्यम् ॥

अतः परं पञ्चदशाऽक्षरपादे अतिशक्वर्यधिकारे वृत्तान्याह-

चन्द्रावर्ता नौ नौ स् ॥ १२ ॥

यत्र पादे ननननसाः स्युस्तद् वृत्तं चन्द्रावर्तेति संज्ञां लभते । सप्तभिरष्टभिश्च यतिः । यथा-

" बहुविधविष, य, वि, मुखमतिसरलं
परहितकर, ण, नि, रतमघविरतम् ।
जनवरमखि, ल, सु, जनकृतनमनं
द्रुतमुपसर, ति, स, कलगुणनिचयः " ॥ ६ ॥

मालर्तुनवकौ चेत् ॥ १३ ॥

यदि षष्ठे नवमे च वर्णे यतिः स्यात्तर्हि पूर्वलक्षण-लक्षिता चन्द्रावर्तैव मालेति नामान्तरं लभते। उदाहरणं यतिपाठभेदे पूर्वमेव ॥

मणिगुणनिकरो वसु-ऋषयः ॥ १४ ॥

यद्यष्टमे सप्तमे च वर्णे विश्रामः स्यात्तदा सैव पूर्वलक्षण लक्षिता चन्द्रावर्ता मणिगुणनिकर इति नामान्तरं लभते। पाठभेदेनोदाहृतिः पूर्वावगन्तव्या ॥

मालिनी नौ म्यौ य् ॥ १५ ॥

यत्र पादे ननमयया: स्युस्तद् वृत्तं मालिनी नाम। अष्टभिः सप्तभिश्च यतिः। यथा–

"भवति सकलविद्योदर्शनैर्यत्कृतानां
जगति मनुजवर्यः पुस्तकानामयत्नात्।
सकलगुणनिधानं नायकं सज्जनानां
कथमतिलघुवाचां मे पदं स्यात्स देवः" ॥ १० ॥

मत्कृते श्रीदयानन्दविजयमहाकाव्येऽष्टमे सर्गे ग्रन्थ-निर्माणप्रसङ्गे पद्यमेतत्। अत्र प्रस्तारे कृते सति समवृत्तसंख्या ३२७६८ एतावती निष्पद्यते। अन्यदपि पञ्चदशाऽक्षरपादं वृत्तमस्मिन्नधिकारे प्रस्तारोत्थं बोध्यम् ॥ अतः परं षोडशा-क्षरपादे अष्ट्यधिकारे वृत्तान्याह–

ऋषभगजविलसितं–भ्रौ नौ न्गौ–स्वरनवकौ ॥ १६ ॥

यत्र पादे भरनननगाः स्युस्तद् वृत्तम् ऋषभगजविलसित मिति भवति। स्वरोपलक्षितेषु सप्तसु नवसु च विरतिः। यथा–

" यद्यपि कालएषविषमितबहुसुजनः
सम्प्रतमागतोस्ति बहुविधमतनिचयैः ।
वैदिकमार्ग एव ऋषिमुनिकृतमहिमो
भारतवर्षमात्रमुपनमयति सहसा " ॥ ११ ॥

अत्र प्रस्तारे कृते सति समवृत्तसंख्या ६५५३६ एतावती जायते । अन्यदपि प्रस्तारोत्थं षोडशाऽक्षरपादं वृत्तमत्राऽधिकारे बोध्यम् ॥ अतः परं सप्तदशाक्षरपादे अत्यष्ट्यधिकारे वृत्तान्याह–

हरिणी न्सौ म्रौ स्लौ ग् समुद्रऋतुऋषयः ॥ १७ ॥

यत्र पादे नसमरसलगाः स्युस्तद् वृत्तं हरिणी नाम । षड्भिश्चतुर्भिः सप्तभिश्च यतिः । यथा–

" जगदिदमसज्ज्ञात्वा मत्वा चलं निजजीवितं
भवनिधिमलं तीर्त्वा विद्यामयेन सुसेतुना ।
विषमिव सुखं मुक्त्वा नारीसुतादिसमुद्भवं
निरवधि सुखे रम्ये रक्ता भवन्ति भवादृशाः" ॥ १२ ॥

पृथ्वी ज्सौ ज्सौ य्लौ ग् वसुनवकौ ॥ १८ ॥

यत्र पादे जसजसयलगाः स्युस्तद् वृत्तं पृथ्वीति संज्ञां लभते । अष्टभिर्नवभिश्च यतिः । यथा–

"कदापि न भवत्यलं विफलकर्मणां भूतले
फलोपगमनं ततोविहितमार्गमासेवय ।
विहाय जडपूजनं जगदधीश्वरं सर्वदा
विचारय हृदन्तरे मम सखे समेदं वचः" ॥ १३ ॥

वंशपत्रपतितं-भ्रौ न्भौ न्लौ गू-दिगृषयः ॥ १९ ॥

यत्र पादे भरनभनलगाः स्युस्तद् वृत्तं वंशपत्रपतितं नाम । दशभिः सप्तभिश्च यतिः । यथा-

"मित्र जहीहि सर्वविषयान्बहुविधविषया-
नत्र सुदूरमेव नितरां यदि तव हृदये ।
मोक्षपथोत्कता विलसति प्रतिपदविमला
योगपथं निषेवय तदा न हि परमितरत्" ॥ १४ ॥

मन्दाक्रान्ता म्भौ न्तौ त्गौ गू सप्तुद्रर्तुस्वराः ॥ २० ॥

यत्र पादे मभनततगगाः स्युस्तद् वृत्तं मन्दाक्रान्ता नाम । चतुर्षु षट्सु सप्तसु च यतिः । यथा-

"एकस्येयं जगति महिमा वर्ततेऽलं महर्षे
र्योगाभ्यासाधिगतमहसो वेदमार्गे रतस्य ।
देशे देशे निगमविषयैर्योऽनिरुद्धप्रतापो
मन्दाक्रान्तामपि भुवमिमामार्यपूर्णां चकार" ॥ १५ ॥

शिखरिणी य्मौ न्सौ भ्लौ गू-ऋतुरुद्राः ॥ २१ ॥

यत्र पादे यमनसभलगाः स्युस्तद् वृत्तं शिखरिणी नाम । षट्स्वेकादशसु च यतिः । यथा-

"परे नित्ये रम्ये परमसुखदे ब्रह्मणि विभौ
निराकारे शुद्धे मरणरहितेऽजन्मनि सुखे ।
स्वकं चेतोयेन प्रतिदिनमनन्ते विनिहितं
दयानन्दं वन्दे भुवि सकलपाखण्डदलनम्" ॥ १६ ॥

मत्कृतदयानन्दलहरीसमाख्ये खण्डकाव्ये पद्यमेतत् ।

अत्र प्रस्तारे कृते सति समवृत्तभेदाः १३१०७२ एतावन्तो भ-

वन्ति। अन्यदपि सप्तदशाऽक्षरपादं वृत्तमत्राधिकारे बोध्यम्॥

अतः परमष्टादशाऽक्षरपादे धृत्यधिकारे वृत्तान्याह—

कुसुमितलतावेल्लिता—म्तौ न्यौ याविन्द्रियर्तुस्वराः ॥ २२ ॥

यत्र पादे मतनययया: स्युस्तद् वृत्तं कुसुमितलता वेल्लिताऽभिधानं भवति। पञ्चसु षट्सु सप्तसु च यतिः। यथा—

"लोकानामेषा प्रकृतिसुलभा दृश्यते विश्वमध्ये
सर्वत्र प्रायः समयबहुला सर्वकार्येषु बुद्धिः।
कर्तव्यं यद्यत्परमपुरुषैः सत्वरं तद्विधेयं
कोजानात्यऽस्मिन्कुसुमितलतावेल्लिते जीवनाशाम्" ॥१७॥

अत्र प्रस्तारे कृते सति समवृत्तभेदाः २६२१४४ एतावन्तो भवन्ति। अन्यदप्यष्टादशाऽक्षरपादं वृत्तमस्मिन्नेवाधिकारे ऽवगन्तव्यम्॥ अतः परमेकोनविंशत्यक्षरपादे अतिधृत्यधिकारे वृत्तान्याह—

शार्दूलविक्रीडितं म् सौ ज् सौ तौ गादित्यऋषयः ॥ २३ ॥

यत्र पादे मसजसततगाः स्युस्तद् वृत्तं शार्दूलविक्रीडितं नाम। द्वादशसु सप्तसु च यतिः। यथा—

"धूर्तैर्धावितमुत्पथैर्निपतितं मूकायितं वादिभि-
र्यातं पोपपुराणजैनयवनामुक्तैर्मतैरप्यलम्।
भ्रान्तं वेदविरोधिभिः परतरं शान्तं खलानां बलैः
यन्नामस्मरणात्सएव परमोधर्मः प्रजां रक्षतात्" ॥१८॥

अत्र प्रस्तारे कृते सति समवृत्तसंख्या ५२४२८८ एतावती निष्पद्यते। अन्यदप्येकोनविंशत्यक्षरपादं वृत्तमत्राधिकारे

ऽवगन्तव्यम् । पद्यमेतन्मत्कृतदयानन्दलहरी खण्डकाव्यस्थम् ॥ अतः परं विंशत्यक्षरपादे कृत्यधिकारे वृत्तान्याह–

सुवदना म्रौ भ्नौ यभौ लगावृषिस्वरर्तवः ॥ २४ ॥

यत्र पादे मरभनयभलगाः स्युस्तद् वृत्तं सुवदनेति निजागद्यते । सप्तसु–सप्तसु–षट्सु च विरतिः । यथा–

"ये लोकाः प्रस्तराग्रे धृतजलवसनाः कुर्वन्ति कटुकं
घण्टानां नादमात्रं कपटसुपटवो मिष्टान्नघटनम् ।
सत्यं ते दर्शयन्ति प्रकृतिविकृतिजं दीपेन कलनं
नास्त्यत्र प्रार्थनायां किमपि किल फलं गच्छन्तु मनुजाः" १९

ग्लिति वृत्तम् ॥ २५ ॥

यत्र पादे यथोत्तरं गुरुलघुभिर्विंशत्यक्षराणि पूर्यन्ते तद् वृत्तं–वृत्तं नाम । पादान्ते यतिः । यथा–

"कामलोभ मोह शोक रोग भोग रोष मोष संभ्रमादि
सर्वमत्र मित्र तूर्णमादरेण दूरमेव संविधेहि ।
यज्ञदानमानपानभोजनादिकार्यजातमीश्वरेण
दत्तमेव कर्मयोगतुल्यमाप्यमोदमेहि मा निधेहि" ॥ २० ॥

अत्र प्रस्तारे कृते सति समवृत्तभेदाः १०४८५७६ एतावन्तो भवन्ति । अन्यदपि विंशत्यक्षरपादं वृत्तमत्राधिकारे समावेशनीयम् ॥

अतः परमेकविंशत्यक्षरपादे प्रकृत्यधिकारे वृत्तान्याह–

स्रग्धरा म्रौ नौ भ्यौ य् त्रिःसप्तकाः ॥ २६ ॥

यत्र पादे मरभनययया: स्युस्तद् वृत्तं स्रग्धरा नाम । सप्तसु–सप्तसु–सप्तसु च यतिः । यथा–

"लोके सर्वत्र विद्यां-प्रथयितुमिव यः-सर्वमोहानुबन्धान्
भित्वा शैलेषु योगा-ऽभ्यसनमनुपमं-कर्त्तुमाविर्बभूव ॥
सोऽयं दूरीकृतान्तः-करणतलमलः-सर्वभूतानुकम्पी
योषिद्वैधव्यभङ्क्ता-जगति विजयते-श्रीदयानन्दएकः" ॥२१॥

मत्कृतदयानन्दलहर्यामेतत्पद्यम् । अत्र प्रस्तारे कृते सति समवृत्तसंख्या २०९७१५२ इयती संजायते । अन्यदप्येकविंशत्यक्षरपादं वृत्तमस्मिन्नधिकारे समालोचनीयम् ॥

अतः परं द्वाविंशत्यक्षरपादे आकृत्यधिकारे वृत्तान्याह-

भद्रकं भ्रौ न्रौ न्रौ न्गौ दिगादित्याः ॥ २७ ॥

यत्र पादे भरनरनरनगाः स्युस्तद् वृत्तं भद्रकं नाम । दशभिर्द्वादशभिश्च यतिः । यथा-

"नन्दनकाननं यदि भवे भवेदथवा न समैव वसतिः
सुन्दरभोजनं यदि भवे मिलेदथवा न समैव तु रुचिः ।
बान्धवसङ्गतिर्यदि भवे भवत्वथवा न समैव विहृति
र्निर्मलमुक्तिमाप्य परमां गतोऽस्ति ममाद्यविमोहविषयः"२२

अत्र प्रस्तारे कृते सति समवृत्तसंख्या ४१९४३०४ एतन्मिता जाजायते। अन्यदपि द्वाविंशत्यक्षरपादं वृत्तमस्मिन्नधिकारे निरीक्ष्यम् ॥

अतः परं त्रयोविंशत्यक्षरपादे विकृत्यधिकारे वृत्तान्याह-

अश्वललितं न्जौ भ्जौ भ्जौ भ्लौ ग् रुद्रादित्याः ॥ २८ ॥

यत्र पादे नजभजभजभलगाः स्युस्तद् वृत्तमश्वललितं नाम । एकादशभिर्द्वादशभिश्च यतिः । यथा-

"अनिशमनन्तमेकमजरं विलोकयति योभवेऽत्र सकले
निगमविधानमेव कुरुते परोपकरणाय यो जनवरः ।
सकलमपास्य मोहकलनं विशोधितमना यमेन नितरां
परमसुखेन सोऽत्र रमते विडम्बनमितोयदन्यदपरम्" ॥२३॥

मत्ताक्रीडा मौ तौ नौ न्लौ गू वसुपञ्चदशकौ ॥ २९ ॥

यत्र पादे ममततननननलगाः स्युस्तद्वृत्तं मत्ताक्रीडेति संज्ञां लभते । अष्टसु पञ्चदशसु च यतिः । यथा–

"भोभोलोका यूयं सर्वे परधनपरजनहरणमघमिति
ज्ञात्वा शीघ्रं त्यक्तुं सन्ध्यां कुरुत न पुनरिदमहह वितनुत ।
यद्यत्पापं तत्तत्सर्वं यदवधि निजहृदि विषयविषयिता
सर्वान्तःस्थं देवं मत्वा तदवधि विजहत मम वचनमिदम्"२४

अत्र प्रस्तारे कृते सति समवृत्तभेदाः ८३८८६०८ एतावन्तो भवन्ति। अन्यदपि त्रयोविंशत्यक्षरपादं वृत्तमत्राऽधिकारे बोध्यम् ॥

अतः परं चतुर्विंशत्यक्षरपादे संकृत्यधिकारे वृत्तान्याह–

तन्वी भ्तौ न्सौ भौ न्याविन्द्रियस्वरमासाः ॥ ३० ॥

यत्र पादे भतनसभभनयाः स्युस्तद्वृत्तं तन्वीति कथ्यते । पञ्चसु सप्तसु द्वादशसु च यतिः । यथा–

"वह्निरवीन्दुपवनजलनभसां
भूमिकणैश्च जननमगमदा ।
योगवशेन विविधविधविषया
या नियमैरभिवृतगुणभावा ॥

यामधिगम्य नियतकृतिपरता
सर्वजनैरपि बहु ध्रियतेऽलम् ।
सा तव नित्यमखिलगुणमहिता
भव्यसुखाय भवतु किल सृष्टिः " ॥ २५ ॥

अत्र प्रस्तारे कृते सति समवृत्त भेदाः १६७७७२१६ एतावन्तो भवन्ति। अन्यदपि चतुर्विंशत्यक्षरपादं वृत्तमत्राऽधिकारे बोध्यम् ॥

अतः परं पञ्चविंशत्यक्षरपादे अभिकृत्यधिकारे वृत्तान्याह–

क्रौञ्चपदा भ्मौ स्भौ नौ नौ ग् भूतेन्द्रियवस्वृषयः ॥ ३१ ॥

यत्र पादे भमसभननननगाः स्युस्तद् वृत्तं क्रौञ्चपदेति संज्ञां लभते । पञ्चभिः पञ्चभिरष्टभिः सप्तभिश्च यतिः। यथा–

" यः समदृष्टिः सर्वहितैषी
शुभकृतिरनुदिनमतिदृढनियमः ।
पुत्रसमानं दीनविलापं
जगदिदमधिकृतिबहुविपदमितम् ॥
वैदिकमन्त्रैरुत्तमभावै-
र्लघुतरमतिसुखगतमधिकमुदम् ।
सत्वरमीहेत्सोऽत्र निषेव्यो
ध्रुवमिह निरवधि सुखमभिलषता " ॥ २६ ॥

अत्र प्रस्तारे कृते सति समवृत्तभेदाः ३३५५४४३२ एतावन्तो भवन्ति । अन्यदपि पञ्चविंशत्यऽक्षरपादं वृत्तमत्राऽधिकारे बोध्यम् ॥

अतः परं षड्विंशत्यऽक्षरपादे उत्कृत्यऽधिकारे वृत्तान्याह–

भुजङ्गविजृम्भितं मौ त्नौ नौ सौ लगौ वसुरुद्रऋषयः ॥ ३२ ॥

यत्र पादे ममतननरसलगाः स्युस्तद् वृत्तं भुजङ्गविजृम्भितं नाम। अष्टस्वेकादशसु सप्तसु च यतिः। यथा—

"यत्र स्नात्वा दुःखान्मुक्तो
जनिमृतिभयरहितमनाः समस्तगुणान्वितो
जीवो नित्योऽविद्याग्रस्तो
लघुतरमुपगतमहिमो विभाति विभाववान्।
लोके विज्ञैः सत्यं तीर्थं
तदुदितमतिशुभसुषमं प्रशस्तगुरोः पदम्।
तोयाभानां गङ्गादीनां
क्वचिदपि न भवति कथनं कदापि नु तीर्थवत्" ॥२७॥

अपवाहको म्नौ नौ नौ न्सौ गौ नवर्तुरसेन्द्रियाणि ॥ ३३ ॥

यत्र पादे मननननननसगगाः स्युस्तद् वृत्तमपवाहक इति संज्ञां लभते। नवसु षट्सु पुनः षट्सु पञ्चसु च यतिः। यथा—

"सर्वज्ञं सकलनिलय–ममरम-
जरमभयमतनुमखिलानन्दं
सर्वेशं यजनजपन–मननतपन-
जननमरणविषयाध्यक्षम्।
सर्वत्र प्रथितमगम–निगम
सुगममतिभिरहह मुनिभिर्दृश्यं
प्रत्यक्षं नमत यजत–भजत जपत
कुरुत विहितमिति मे वाक्यम्" ॥ २८ ॥

अत्र प्रस्तारे कृते सति समवृत्तसंख्या सङ्कलनया [ ६७१०८८६४ ] एतावती निष्पद्यते । अन्यदपि प्रस्ताररीति संपन्नं कल्पितनक्षसंज्ञं षड्विंशत्यऽक्षरपादं वृत्तमस्मिन्नऽधिकारे समावेशनीयम् ॥ एवं पद्यकाव्यमूलकानि वृत्तान्युक्त्वा साम्प्रतं गद्यकाव्यमूलकान्दण्डकामाह । तेषां समवृत्तप्रसंगे कथनं तादृशलक्षणवत्त्वात् । काव्यस्य द्वैविध्यन्तु काव्याऽलङ्कारसूत्रकृता यास्काचार्येण तत्रैव [ काव्यं गद्यं पद्यं चेति] सूत्रमुखेन प्रदर्शितम् । गद्यस्यापि त्रैविध्यन्तेनैव [गद्यं वृत्तगन्धिचूर्णमुत्कलिकाप्रायं चेति] सूत्रमुखेन निदर्शितम् । त्रिविधमप्येतद्गद्यं दण्डकमूलमेव । सर्वमप्येतन्मत्कृतयास्कसूत्रभाष्ये समालोचनीयम् ॥ षड्विंशत्यक्षराया उत्कृतेः समनन्तरं दण्डकानां पाठात्सप्तविंशत्यऽक्षरपादकल्पनमुचितमेव, सर्वेषां छन्दसामेकैकाक्षरवृद्ध्या प्रवृत्तेः । इत्थं प्रयोजनापेक्षतया तल्लक्षणमाह–

दण्डको नौ रः ॥३४॥

यत्र पादे नगणद्वयात्परं सप्तरगणाः स्युस्तद् वृत्तं दण्डक इति कथ्यते । तस्य संज्ञाविशेषानाह–

प्रथमश्चण्डवृष्टिप्रपातः ॥ ३५ ॥

षड्विंशत्यक्षरात्मकपादादनन्तरं सप्तविंशत्यक्षरपादः प्रथमो यो दण्डकः स चण्डवृष्टिप्रपात इति नाम लभते । दण्डकमात्रे पादान्ते यतिः । यथा–

" मम तु मनसि सर्वथैवं विभाति
प्रकर्षेण कुर्यामहं ग्रन्थसंपादनं
जगति भवतु सर्वसामाजिकानां
गृहेषु प्रथस्तो मदीयो निबन्धोदयः ।
तदनु गलतु धर्मसामाजिकानां
कवित्वाभिमानं ममाग्रे नितान्तद्रुतं
झटिति पततु पूर्वकाव्यादवाचय
प्रसङ्गान्मनः सर्वविद्वज्जनानां शुभम् " ॥ २९ ॥

अन्यत्र रातमाण्डव्याभ्याम् ॥ ३६ ॥

रातमाण्डव्याभ्यामृषिभ्यामन्यत्र स्वविरचितग्रन्थेऽस्य दण्डकस्य पूर्वोक्तैव संज्ञा विहिता । ऋष्यन्तरनाम्नोर्ग्रहणं स्वग्रन्थे स्वहमत्यर्थम् ॥

शेषः प्रचित इति ॥ ३७ ॥

उक्तादन्यः शेषः । चण्डवृष्टिप्रपातादन्यः सर्वोऽपि दण्डकः प्रचित इति संज्ञां लभते। पूर्वदण्डकपर्यन्तमेकाक्षर वृद्ध्या कल्पनं विहितम्, इतः परं दण्डकमात्रे रगणोपलक्षिताऽक्षरत्रयेण वृद्धिः। नयुगलं तु सर्वत्रादौ विधेयमेव । दण्डको नौ र इति श्रवणात् । यथा–

" यदुदितमिह पिङ्गले लक्षणं तन्मया
नव्यपद्यैरलं भूषितं सत्कवीनां मुदे
भवतु तदलमुद्धुरारम्भवत्काव्य
कौतूहलाविष्टचेतोवतां मानवानां कृते ।

विषयनिरतभट्टकेदारकादिद्विजैः
दूषितं वृत्तरत्नाकरादिप्रबन्धेष्वलं
निजरुचिकृतलक्षणं तन्मया खण्डितं
तत्र तत्रादरादन्मयाऽऽलोकितं गौरवात् " ॥ ३० ॥

एवमन्येपि दण्डकाः प्रतिपादं रगणवृद्ध्या विवेचनीयाः। ते चार्णार्णव व्याल जीमूत लीलाकरोद्दामशङ्खाराम संग्राम सुराम वैकुण्ठ सोत्कण्ठसारकासारविस्तार संहार नीहार मन्दार केदार साधार सत्कार संस्कार माकन्द गोविन्द सानन्द संदोह नन्दादयः ॥

एकैकरगणवृद्ध्या नद्वयोत्तरैकत्रिंशदधिकशतत्रयरगणघटितैकोनसहस्राक्षरपादपर्यन्तं कविप्रयोगानुसारेण दण्डका ज्ञेयाः। तथा च रगणघटितदण्डकाः पञ्चविंशत्यधिकशतत्रय [३२५] संख्याका भवन्ति। किञ्च, शेषः प्रचित इति सूत्रे शेषशब्दस्य सामान्यतया प्रयोगाद् रगणघटितदण्डकादन्यः सर्वोपि शेषः इति निर्वचने नद्वयादुत्तरं सप्तयगणवानपि दण्डको भवति। प्रतिपादं च यगणवृद्ध्या रगणघटितदण्डकवदेवैकोनसहस्राक्षरपादपर्यन्तं वृद्धिः, सङ्कलनया तावती संख्या चास्यापि भवत्येव। एवं केवलसगणघटितपादाः, केवलयगणघटितपादाः, यथोत्तरं गुरुलघुभ्यां लघुगुरुभ्यां घटितपादाः, केवलरगणघटितपादाः, केवलमगणघटितपादाः, केवलभगणघटितपादाः, सर्वेऽपि दण्डकाः कविप्रयोगानुसारेण यथायथं भवन्ति। नगणद्वयादुत्तर-

मप्येषां घटना सम्भवति। सा सर्वापि सहृदयहृदयैरुदाहर्तव्येति सर्वमवदातम् ॥

इति श्रीमद्वर्तमानकविरत्नाऽखिलानन्दशर्म
प्रणीतवैदिकभाष्योपेते छन्दःसूत्रे
समवृत्तविवेचनं नाम
सप्तमोऽध्यायः
॥ ७ ॥

# अथाऽष्टमोऽध्यायः

पूर्वस्मिन्नध्याये यथायथं समवृत्तविवेचनं विहितमिदानीं तत्तदधिकारे समवृत्तेष्वनुक्तानि लोकवेदयोरुपलब्धानि समवृत्तान्तर्गतानि कानिचिद्वृत्तानि निदर्शयितुमिच्छुराचार्यः प्रस्तारनष्टोद्दिष्टादिवर्णनायाष्टममध्यायमारभते ॥

अत्रानुक्तं गाथा ॥ १ ॥

अत्र छन्दः सूत्रे नामोद्देशेन यदनुक्तं छन्दस्तत्सर्वं कविप्रयोगेषु दृश्यते चेद्गाथेति समवगन्तव्यम् । अनुक्तमिति शब्दस्य सामान्यार्थवत्त्वाद्यद्यदनुक्तं तत्तदुत्तममपि वृत्तं गाथेति सामान्यामाख्यां लभते। प्रस्तारजन्यानामन्येषामपि निजनामकल्पितानां नववृत्तानां समावेशो गाथाऽधिकार एव यथायथमनुमेयः । सामान्यतया तेषामप्यनुक्तत्वात् ॥

साम्प्रतं काश्चिद्गाथाः सूत्रकारएव सूत्रमुखेन समादिशति। तत्र पूर्वमेकादशाक्षरपादे त्रिष्टुबऽधिकारे गाथामाह–

कुड्मलदन्ती भ्तौ न्गौ गिन्द्रियरसाः ॥ २ ॥

यत्र पादे भतनगगाः स्युस्तद् वृत्तं कुड्मलदन्तीति संज्ञां लभते । पञ्चभिः षड्भिश्च यतिः । यथा–

"सर्वनिवेशा निरवधिभूतिर्लोकविचित्रा नवनवपूर्तिः ।
वाञ्छितदात्री निगमगतानां मङ्गलकर्त्री भवतु जनानाम्" ॥१॥

एवमन्याअपि गाथा अत्राधिकारे समालोचनीयाः ।
अतः परं द्वादशाक्षरपादे जगत्यधिकारे काश्चिद्गाथाः प्राह–

वरतनुर्नजौ ज्रौ षड्रसाः ॥ ३ ॥

यत्र पादे नजजरा: स्युस्तद् वृत्तं वरतनुरिति निजागद्यते। षड्भिः षड्भिश्च यतिः। यथा–

"अयि विजहीहि जडोपसर्पणं
कुरु निगमोक्तपथोपसर्पणम्।
क्षणिकमहोत्सव एष वर्तते
वरतनवः प्रवदन्ति पण्डिताः" ॥ २ ॥

जलधरमाला म्भौ स्मौ समुद्रवसवः ॥ ४ ॥

यत्र पादे मभसमा: स्युस्तद् वृत्तं जलधरमालेति संज्ञां लभते। चतुर्भिरष्टभिश्च यतिः। यथा–

"मन्ये विद्यां सकलसमृद्धेः कर्त्री
मस्मिँल्लोके नियतिवशादायाताम्।
नैवं चेत्स्यात्कथमिह विद्यावन्तो
रम्यैश्वर्याः प्रतिदिनमासेवन्ते" ॥ ३ ॥

गौरी नौ रौ ॥ ५ ॥

यत्र पादे ननररा: स्युस्तद् वृत्तं गौरीति निजागद्यते। पादान्ते चास्यां यतिः। यथा–

"अभिनवकुसुमानुविद्धप्रभं गुरुकुलमनुयाहि दिव्यप्रभम्।
सकृदपि मनुजेन यत्सेवितं प्रदिशति नितरामनन्तां मुदम्" ४

ललना भ्तौ न्साविन्द्रियर्षयः ॥ ५ ॥

यत्र पादे भतनसा: स्युस्तद् वृत्तं ललनेति समाख्यामन्वेति। पञ्चभिः सप्तभिश्च यतिः। यथा–

"वैदिकमन्त्रैरनुगतविषया लौकिकपद्यैरपि बहुरुचिरा ।
पिङ्गलसूत्रे मम कृतिरतुला भाष्यमयी सा प्रदिशतु कविताम्" ५

एवमन्यासामप्यस्मिन्नधिकारे समावेशो विधेयः । अतः परं त्रयोदशाऽक्षरपादे अतिजगत्यधिकारे काश्चिद्द गाथाः समादिशति—

कनकप्रभा स्जौ स्जौ ग् ॥ ७ ॥

यत्र पादे सजसजगाः स्युस्तद्‌ वृत्तं कनकप्रभेति संज्ञां लभते । पादान्ते चाऽत्र यतिः । यथा—

" अतुलप्रभा यमशमानुगामिनी
विपुलाशया रसगुणोपधायिनी ।
जनकस्य मे सकलसाधनान्विता
न विराजते जगति किन्न विस्तृतिः" ॥ ६ ॥

कुटिलगतिर्नौ तौ ग् स्वरर्तवः ॥ ८ ॥

यत्र पादे ननततगाः स्युस्तद्‌ वृत्तं कुटिलगतिरिति संज्ञामभ्येति । सप्तभिः षड्भिश्च यतिः । यथा—

" निखिलशिवमये सर्वदुःखापहे
विषयगतधियां मानसं नैत्यलम् ।
ध्रुवमिदमुचितं किं कथंचित्सतां
यदखिलजगदीशस्य नैवाऽर्चना " ॥ ७ ॥

इत्थमितरगाथा अप्यत्रान्तर्धेयाः ॥ साम्प्रतं चतुर्दशाऽक्षरपादे शक्कर्यधिकारे गाथा आह—

वरसुन्दरी भ्जौ स्नौ गौ ॥ ९ ॥

यत्र पादे भजसनगगाः स्युस्तद्वृत्तं वरसुन्दरीति संज्ञामन्वेति । पादान्ते यतिः । यथा—

"अत्र विविधोत्तमपदार्थपरिपूर्णे
मित्र जगदीश्वरनिबन्धविधिशीर्णे ।
कुत्र निगमोदितमपास्य पथमच्छं
यासि विधिबोधितमवेहि परमेकम्" ॥ ८ ॥

कुटिला म्भौ न्यौ गौ वेदरससमुद्राः ॥ १० ॥

यत्र पादे मभनयगगाः स्युस्तद्वृत्तं कुटिलेति समाख्यामभ्येति । चतुर्भिः षड्भिश्चतुर्भिश्च यतिः । यथा—

"मार्गे मार्गे प्रभवति बहुविद्वत्सङ्गः
सङ्गे सङ्गे प्रसरति किल रम्या कीर्तिः ।
कीर्तौ कीर्तौ पुनरपि शुभवाञ्छाऽऽवृत्ति
स्तस्यां सत्यां जगदिदमपि सौख्यापूर्णम्" ॥९॥

एवमन्याअप्यत्राऽधिकारे निवेश्याः ॥ अतः परं षोडशाऽक्षरपादे अष्टयऽधिकारे गाथाः प्राह—

शैलशिखा भ्रौ न्भौ भ्गौ भूतरसेन्द्रियाणि ॥११॥

यत्र पादे भरनभभगाः स्युस्तद्वृत्तं शैलशिखेति संज्ञां लभते । पञ्चभिः षड्भिः पञ्चभिश्च यतिः । यथा—

"आर्यसमाजमध्यमधिगम्य मनस्यपरं
नैति कदापि शाक्तशिवविष्णुजिनेन्द्रमतम् ।
सभ्यवरस्य पुण्यपरिपाकवशाज्जगतीं
प्राप्य तदेककर्मनिरतस्य विधेरुदयात्" ॥ १० ॥

वरयुवती भ्रौ न्यौ न्गौ ॥ १२ ॥

यत्र पादे भरनयनगाः स्युस्तद् वृत्तं वरयुवती समभिख्यं भवति। पादान्ते चास्मिन्यतिः। यथा—

"मानवधर्मशास्त्रमेकं किल गुणसदनं
सर्वत एव पूर्वमस्यां भुवि परिरचितम्।
कारुणिकेन तेन यस्मिन्बहुविधिविहितं
दृश्यत एव नूनमत्राऽधिगतशुभपथैः" ॥११॥

एवमन्या अपि बोध्याः॥ अतः परं सप्तदशाऽक्षरपादे अत्यष्ट्यऽधिकारे गाथाः प्राह—

अतिशायिनी सौ ज्भौ ज्गौ गू दिक्स्वराः ॥ १३ ॥

यत्र पादे ससजभजगगाः स्युस्तद् वृत्तमतिशायिनीति संज्ञां लभते। दशभिः सप्तभिश्च यतिः। यथा—

"इदमत्र नितान्तमुत्तमं जगति वर्तते नु
यदभीष्टफलाऽतिशायिनी निगमवृद्धिरेति।
मनुजान्तरमाशु विस्तृता सकलवस्तुदाऽपि
परतोनहि किञ्चिदुत्तमं मनसि मे विभाति" ॥ १२ ॥

अवितथं न्जौ भ्जौ ज्लौ गू ॥ १४ ॥

यत्र पादे नजभजजलगाः स्युस्तद् वृत्तमवितथमिति समुद्गीयते। पादान्ते चाऽत्र यतिः। यथा—

"अधिगतसर्वशास्त्र, मतिसुन्दर, कीर्तियुतं
ऋषिजनतुल्यवृत्त, मनुबोधित, सर्वजनम्।
अवितथवेदमार्ग, परिशीलन, दिव्यगुणं
स्वगुरुमलं नमामि, नवकाव्यस, मुद्गमरम्" ॥ १३ ॥

वस्विन्द्रियसमुद्राश्चेत्कोकिलकम् ॥ १५ ॥

पूर्वोक्तलक्षणलक्षिते पादे यद्यष्टसु पञ्चसु चतुर्षु च यतिः स्यात्तदा तदेवाऽवितथं कोकिलकमिति नामान्तरं समभ्येति। यतिपाठभेदेनोदाहरणं पूर्वमेव। एवमन्याः॥ अतः परमष्टादशाऽक्षरपादे धृतयधिकारे काश्चिद्गाथा उदाहरति—

विबुधप्रिया सौ जौ भ्रौ वसुदिशः ॥ १६ ॥

यत्र पादे रसजजभराः स्युस्तद् वृत्तं विबुधप्रियेति निजागद्यते। अष्टसु दशसु च यतिः। यथा—

" वेदविस्तरमञ्जुलद्युतिरुत्तरोत्तरहर्षदा
सार्यसज्जनसङ्गतिः किल सर्वदा विबुधप्रिया।
सर्वभूतलमानवैरनुसेविता यदि भाग्यतो
रम्यमेतदलं मते मम जातमस्ति विधेर्वशात् " ॥१४॥

नाराचकं नौ रौ रौ ॥ १७ ॥

यत्र पादे ननररररा: स्युस्तद् वृत्तं नाराचकमिति कथ्यते। दशभिरष्टभिश्च यतिः। यथा—

" मम पितुरिह लोकमध्ये विशुद्धास्ति कीर्तिर्यथा
विधिविहितमभीष्टदं तत्समाजोपकारानुगम्।
मम हृदयपथेप्यहोऽलं बलादेव संवेशितं
शुभनिगमगुणानुगत्वान्महाकाव्यसङ्कल्पनम् " ॥ १५ ॥

एवमन्या अपि गाथा अत्राधिकारेऽन्तर्धेयाः। अतः परमेकोनविंशत्यऽक्षरपादे अतिधृत्यऽधिकारे काश्चिद्गाथाः समादिशति—

**विस्मिता य्मौ न्सौ रौ ग् रसर्तुस्वराः ॥ १८ ॥**

यत्र पादे यमनसररगाः स्युस्तद् वृत्तं विस्मितेति भवति। षड्भिः षड्भिः सप्तभिश्च यतिः । यथा–

" मदीयेऽस्मिन्काव्ये विमलरचने दीयतां चित्तवृत्ति
र्नवीना चेच्छ्रद्धा हृदयपथगा साम्प्रतं सङ्गता स्यात् ।
समस्तं यत्रेष्टं विलसति परं नैगमं शास्त्ररम्यं
परं किं नैतादृक्क्रिमपि रचनं प्रागभूदस्य दृष्ट्या " ॥१६॥

एवमन्या अपि बोध्याः । अतः परमेकविंशत्यक्षरपादे प्रकृत्यधिकारे काश्चिद्गाथाः प्राह–

**शशिवदना न्जौ भ्जौ ज् ज्रौ रुद्रदिशः ॥ १९ ॥**

यत्र पादे नजभजजजराः स्युस्तद् वृत्तं शशिवदनेति संज्ञां समन्वेति । एकादशभिर्दशभिश्च यतिः । यथा–

"निगमपथानुगस्य निपतज्जगदुद्धरणैककर्मणः
प्रकटितसत्पथस्य परितोमतखण्डनदत्तशर्म्मणः ।
विदलितकापथस्य नितरां धृतकीर्त्तिमयैकवर्म्मणः
कविजननायकस्य भवताज्जगतीतल एव सम्भवः " ॥१७॥

एवमादीनि वृत्तानि सहस्रशः प्रस्तारेषु महाकविप्रयोगेषु च दृश्यन्ते । विशेषसंज्ञाकल्पनाभावात्तानि महर्षिणा नामनिर्देशं कृत्वा नोक्तानि, तानि सर्वाण्यपि गाथाशब्देन बोध्यानीति शम् । इत्थं समादिवृत्तत्रयमभिधायेदानीं तेषामुत्पत्तिप्रदर्शनायानुक्तानां च वृत्तानां कविप्रयोगेषु दृश्यमानानां सद्भावोपपत्तये प्रस्तारादयः प्रत्ययाः प्रारभ्यन्ते ।

प्रतीयते संख्यादिकमेभिस्ते प्रत्ययाः तेष्वाद्यः प्रस्तारः स च स्वरूपादिविन्यसनद्वारा कैश्चित्कौतुकमिति मत्वाऽन्यैरति परिश्रमव्ययभीतया च न दर्शितः। वस्तुतस्तु प्रस्तारपरिज्ञानमेव छन्दःशास्त्रावगाहनमूलम्। न तद्विज्ञानमन्तरा छन्दोविचितिसौकर्यं धारयितुं शक्यते। अतस्तत्प्रकारं वितनोमि ॥

प्रथमभेदस्यैकाक्षरात्पादादारभ्य षड्विंशत्यक्षरात्मकपादपर्यन्तं गुरुत्वमेव। तदधस्ताल्लघोर्विन्यसनम्। शेषं यथोर्ध्वम्। ऊने गुरुनिवेशः। सर्वलघुं ह यावत्। अथमाद्यः प्रकारः॥ प्रकारान्तरमाह–एकाक्षरप्रस्तारादारभ्य षड्विंशत्यक्षरप्रस्तारपर्यन्तं प्रत्यक्षरं पङ्क्तिवृद्धिसम्भवात्प्रथमपङ्क्तावौत्तराधर्यतो गुरुलघुरचनैव। द्वितीयपङ्क्तौ गुरुद्वयलघुद्वय विन्यसनम्। तृतीयस्यां पङ्क्तौ गुरुलघुचतुष्टयसमावेशः। चतुर्थपङ्क्तावष्टौ लघवोगुरवश्च। एवं प्रतिपङ्क्ति–द्विगुणयेन गुरूणां लघूनां च समावेशात्सर्वलघुपर्यन्तमनया रीतयाऽभिमतार्थसिद्धिः औत्तराधर्यं सर्वत्र योज्यम्। द्वितीयोऽयं प्रकारः॥

एवं प्रकारद्वयमावर्ण्य तृतीयप्रकारेण गायत्र्यादिप्रस्तार सिद्ध्यर्थमेकाक्षरप्रस्तारपूर्वकं द्व्यक्षरप्रस्तारं सूत्रद्वयेनाचार्य एवाह–

द्विकौ ग्लौ ॥ २० ॥

तत्र प्रथमाक्षरप्रस्तारे सूत्रस्याऽयमर्थः। * द्वावेव द्विकौ। गश्च लश्च ग्लौ। द्वौ गुरुलघू प्रथमाक्षरप्रस्तारबोध-

* स्वार्थे कन्–अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति ॥

काविस्यर्थः । पूर्वं गुरुं विन्यस्य तदधस्ताल्लघोः स्थापने भेद द्वयवानेकाक्षरप्रस्तारः सिध्यति । स यथा–

स्वरूपतः संख्यया च निदर्श्यते–

| ऽ | १ | भेदः | उक्तायाम् |
|---|---|---|---|
| । | २ | भेदः | |

द्व्यऽक्षरप्रस्तारे तु द्वे आवृत्ती प्रमाणमनयोरिति द्विकाविति विग्रहः । संख्यायाअतिशदन्तायाः कन् । द्वितीय पङ्क्तौ द्वौ ग्लौ स्थापनीयावित्यर्थः। तौ च पृथग्भूतावेव। उत्तरसूत्रात्पृथगित्यस्यानुवृत्तेः । तौ च ग्लौ द्विरावृत्तेन प्रथमाऽक्षरप्रस्तारेण–

मिश्रौ च ॥ २१ ॥

कर्तव्यौ। एतावता द्वितीयपङ्क्तौ द्विरावृत्तगुरुलघु स्थापनानन्तरं,ततःप्रथमपङ्क्तौ द्विरावृत्तैकाऽक्षरप्रस्तारस्थितौ द्व्यऽक्षरप्रस्तारसिद्धिः।सा यथा स्वरूपतः संख्यया च निदर्श्यते–

| भेदः | १ | ऽऽ | अत्युक्तायाम् |
|---|---|---|---|
| ,, | २ | ।ऽ | |
| ,, | ३ | ऽ। | |
| ,, | ४ | ।। | |

पृथग्लाऽमिश्राः ॥ २२ ॥

त्र्यऽक्षरप्रस्तारे तृतीयपङ्क्तौ गुरवोलघवश्चाऽमिश्रा दातव्याः। अमिश्रा इति कथनात्तेषां मेलनाऽभावः। पृथगिति कथनं पूर्वसूत्रार्थम्। अमिश्रा इत्यनेनैवात्र कृतार्थत्वात् ततः पूर्वं द्विरावृत्तद्व्यऽक्षरप्रस्तारस्थितौ त्र्यऽक्षरप्रस्तार सिद्धिः । सा यथा स्वरूपतः संख्यया च निर्दिश्यते ॥

मध्यायाम्

| भेदः | „ | „ | „ | „ | „ | „ | „ |
|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| SSS | ISS | SIS | IIS | SSI | ISI | SII | III |

एवं चतुरक्षरप्रस्तारे चतुर्थपङ्क्तौ द्वैगुण्येन गुरवो लघवश्च पृथक्पृथगौत्तराधर्य्येण स्थाप्याः, ततः पूर्वं द्विरावृत्त त्र्यक्षरप्रस्तारः। एवं षोडश भेदाः। ते स्वरूपतः संख्यया च निदर्श्यन्ते। यथा–

| | | | |
|---|---|---|---|
| SSSS | १ | SSS I | ९ |
| I SSS | २ | I SS I | १० |
| S I SS | ३ | S I S I | ११ |
| I I SS | ४ | I I S I | १२ |
| SS I S | ५ | SS I I | १३ |
| I S I S | ६ | I S I I | १४ |
| S I I S | ७ | S I I I | १५ |
| I I I S | ८ | I I I I | १६ |

प्रतिष्ठायाम्

एवमेव पञ्चाऽक्षरप्रस्तारे पञ्चमपङ्क्तौ द्वैगुण्येन गुरवो लघवश्च पृथक्पृथगौत्तराधर्येण स्थाप्याः । ततः पूर्वं द्विरावृत्तश्चतुरक्षरप्रस्तारः । एवं द्वात्रिंशद्भेदाः, ते स्वरूपतः संख्यया च निदर्श्यन्ते । यथा—

| | |
|---|---|
| ऽऽऽऽऽ | १ |
| ।ऽऽऽऽ | २ |
| ऽ।ऽऽऽ | ३ |
| ।।ऽऽऽ | ४ |
| ऽऽ।ऽऽ | ५ |
| ।ऽ।ऽऽ | ६ |
| ऽ।।ऽऽ | ७ |
| ।।।ऽऽ | ८ |
| ऽऽऽ।ऽ | ९ |
| ।ऽऽ।ऽ | १० |
| ऽ।ऽ।ऽ | ११ |
| ।।ऽ।ऽ | १२ |
| ऽऽ।।ऽ | १३ |
| ।ऽ।।ऽ | १४ |
| ऽ।।।ऽ | १५ |
| ।।।।ऽ | १६ |
| ऽऽऽऽ। | १७ |

| | |
|---|---|
| ।ऽऽऽ। | १८ |
| ऽ।ऽऽ। | १९ |
| ।।ऽऽ। | २० |
| ऽऽ।ऽ। | २१ |
| ।ऽ।ऽ। | २२ |
| ऽ।।ऽ। | २३ |
| ।।।ऽ। | २४ |
| ऽऽऽ।। | २५ |
| ।ऽऽ।। | २६ |
| ऽ।ऽ।। | २७ |
| ।।ऽ।। | २८ |
| ऽऽ।।। | २९ |
| ।ऽ।।। | ३० |
| ऽ।।।। | ३१ |
| ।।।।। | ३२ |
| सुप्रतिष्ठायाम् | |
| एतावन्तएवभेदाः | |

अनेनैव प्रकारेण षडक्षरप्रस्तारे षष्ठपङ्क्तौ द्वैगुण्येन गुरवोलघवश्चौत्तराधर्येण निवेश्याः, तेभ्यः पूर्वंद्विरावृत्तः

पञ्चाक्षरप्रस्तारः। एवं चतुःषष्टिभेदाः, ते स्वयमूह्याः। सर्वेषां समवृत्तानां प्रस्तारे कृते पूर्वपूर्वापेक्षया उत्तरोत्तरस्य द्विगुणा भेदा भवन्ति। ते च स्फुटा एव॥

साम्प्रतं प्रस्तारसमष्टिसंज्ञानिष्पत्त्यर्थमाह—

वसवस्त्रिकाः॥ २३॥

पूर्वोक्ते त्र्यक्षरप्रस्तारे अष्टौ त्रिका जायन्ते। ते च मगणादयः। एवं चतुरक्षरप्रस्तारे षोडश चतुष्काः पञ्चाक्षर प्रस्तारे द्वात्रिंशत्पञ्चकाः। षडक्षरे चतुःषष्टिः षट्काः। अनयैव दिशा षड्विंशत्यक्षरपादपर्यन्तं प्रस्तारः कर्तव्यः॥

साम्प्रतं प्रस्तारशोधनोपयोगि नष्टमाह। नष्टं नाम तदसच्छून्ययथेष्टरूपनिदर्शनम्। तत्सूत्रकारः स्वयमेव सूत्राभ्यामाह—

लर्द्धे॥ २४॥

यदैवं ज्ञातुमिच्छेत्प्रतिष्ठायां समवृत्तं षष्ठं कीदृक् तदा तदङ्कमर्धयेत्॥ ६×३×तस्मिन्नर्द्धे कृते सति लघुरेकोलभ्यते तं भूमौ विन्यसेत्। अवशिष्टा त्रिसंख्या सार्द्धयितुं न शक्यते। तत्र किं कार्यमित्याह—

सैके ग्॥ २५॥

अर्द्धे इत्यनुवर्त्यम्। तत्र विषमाङ्के $\frac{3}{1}$ एकं दत्वा तदर्धयेत् ×४—२×तदैको गुरुर्लभ्यते तं लघोः परतः स्थापयेत्॥ [। ऽ। ऽ] ततोऽवशिष्टा द्विसंख्या तस्याः समत्वादर्धे कृते २-१+लघुरेकोलभ्यते स गुरोः परस्ताद्विन्यसनीयः। अवशिष्टा

एकसंख्या, साऽर्द्धयितुं न शक्यते । अतस्तस्यामेकं दत्वा $\frac{१}{१}$ तामर्धयेत् । २-१ तदेको गुरुर्लभ्यते, स लघोः परस्तादवस्थाप्यः । एवमभिमतरूपसिद्धिः ॥

यदैवं ज्ञातुमिच्छेत्प्रतिष्ठायां विषमवृत्तं पञ्चमं कीदृक् तदा पञ्चमाङ्कस्य विषमत्वात्पूर्वमेकं गुरुं विन्यस्य पुनस्तेष्वेकं दत्वा $\frac{५}{१}$ पुनस्तदर्धे ६-३ विषमे गुरुरेव । तस्मिन्नेकं दत्वा $\frac{३}{१}$ तस्यार्द्धे ४-२ अङ्कस्य समत्वाल्लघुरेव । पुनस्तस्यार्द्धे २-१ अङ्कस्य विषमत्वादेको गुरुः । एवमभीष्टरूपनिष्पत्तिः ॥

एवं सर्वासु जातिषु समासु विषमासु वा नष्टं विधेयम् । शिष्यजनबोधाय कांश्चित्तद्भेदान्निदर्शये ॥

षडक्षरप्रस्तारे ६ एकषष्टितमोभेदः ६१ कीदृगिति पृष्टे-

प्रक्रिया [ ६१ ] $\left\{\frac{६१+१}{२} ३१\right\}$ $\left\{\frac{३१+१}{२} १६\right\}$ [८] (४) (२)

उत्तरम् ऽ ऽ । । । ।

षडक्षरप्रस्तारे ६ त्रिषष्टितमोभेदः ६३ कीदृगिति पृष्टे-

[ ६३ ] $\left\{\frac{६३+१}{२} ३२\right\}$ [ १६ ] [ ८ ] [ ४ ] [ २ ]

ऽ । । । । ।

पञ्चाक्षक्षरप्रस्तारे ५ सप्तविंशतितमोभेदः कीदृक्-

[ २७ ] $\left\{\frac{२७+१}{२} १४\right\}$ [ ७ ] $\left\{\frac{७+१}{२} ४\right\}$ [ २ ]

ऽ । ऽ । ।

चतुरक्षरप्रस्तारे ४ त्रयोदशो १३ भेदः कीदृगिति पृष्टे-

[ १३ ] $\left\{ \frac{१३+१}{२} \; ७ \right\}$ $\left\{ \frac{७+१}{२} \; ४ \right\}$ [ २ ]

ऽ ऽ । ।

चतुरक्षरप्रस्तारे ४ द्वितीयोभेदः कीदृगिति पृष्टे-

[ २ ] [ १ ] [ १ ] [ १ ]

। ऽ ऽ ऽ

२-३ [ ऽ । ] ३-४ । । ऽ
१ २
४ १

---

३-७ ऽ । । ३-५ ऽ ऽ ।
१ १
८ ६
४ ३

---

४-४ । । ऽ ऽ ६-६ । ऽ । ऽ ऽ ऽ
२ ३-१
१-१ ४
२ २
 १-१
 २

७-७-१
८
४
२
१-१
२
१

ऽ।।ऽऽऽऽ

---

४-१०
५-१
६
३

।ऽऽ।

---

६-९
१
१०
५-१
६
३-१
४

ऽऽऽ।ऽऽ

---

७-५
१
६
३-१
४
२
१-१
२

ऽऽ।ऽऽऽऽ

---

८-८
४
२
१-१
२
१-१
२
१

।।।ऽऽऽऽ

२६-२६
१३-१
१४
७-१
८
४
२
१-१
२
१-१
२
१-१
२
१-१
२
१-१
२
१-१
२
१

S S S S S S S S S S S S S S S S S S S S S S S ।। S S ।

२०-२० ।। S S । S S S S S S S S S S S S S S S S S
१०
५-१
६
३-१
४
२
१-१
२
१-१
२
१-१
२
१-१
२
१-१
२

अनेनैव प्रकारेण सर्वजातिषु समं विषमं वा पृष्टं वृत्तं पट्टे विन्यस्य विवेचनीयम् ॥

साम्प्रतं प्रस्तारनिश्चयोपयोग्युद्दिष्टमाह—

प्रतिलोमगुणं द्विर्लाद्यम् ॥ २६ ॥

यद्यद् वृत्तं जिज्ञासेत्तत्तद् भूमौ प्रस्तार्य्य तन्मध्यस्थ-लघुषु योन्त्योलघुस्तदुपर्य्यधोवैकाङ्कं लिखित्वा तत्रैव तद् द्विगुणयेत् । ततस्तत्पूर्वस्मिँल्लघौ तदङ्कं द्विगुणितं कृत्वा पूर्ववन्न्यसेत् । यदा त्वेवंप्रकारे क्रियमाणे गुरुमापद्यते संख्या, तदा–

ततोऽप्येकं जह्यात् ॥ २७ ॥

पुनरुत्तरोत्तरं द्विगुणितं कृत्वा गुरुस्थाने एकं त्यक्त्वा पुनर्द्विगुणादिक्रमेण यावत्प्रस्तारपूर्तिं कुर्य्यात् । एवं कृते या संख्या सम्पद्येत तावतिथं तद् वृत्तं जानीयात् । अयमेकः प्रकारः । प्रकारान्तरमाह–जिज्ञासितवृत्तरूपं भूमौ विन्यस्य तदुपरि प्रतिभेदं द्विगुणाङ्कविन्यसनं विदध्यात् । तेषु लघु भेदोपरि गताङ्कानेकीकृत्य पिण्डितायां संख्यायामेकमुपरिष्टाद्दत्वा यदङ्कं निष्पद्येत तदेव पूर्णाङ्कं निश्चिनुयादिति । व्युत्पित्सुजनबोधाय प्रकारद्वयेनापि तद्भेदानुच्चिनोमि ॥

| १ | २ | ४ |
|---|---|---|
| । | । | ऽ |
| | | ३+१ |
| | | ४ |

| १ | २ | ४ | ८ |
|---|---|---|---|
| ऽ | ऽ | । | ऽ |
| | ४+१ | | |
| | ५ | | |

| १ | २ | ४ | ८ | १६ |
|---|---|---|---|---|
| ऽ | । | ऽ | । | ऽ |
| | | | १०+१ | |
| | | | ११ | |

| १ | २ | ४ | ८ | १६ | ३२ |
|---|---|---|---|---|---|
| ऽ | । | ऽ | । | ऽ | । |
| | | ४२+१ | | | |
| | | ४३ | | | |

| १ | २ | ४ | ८ | १६ | ३२ | ६४ |
|---|---|---|---|---|---|---|
| ऽ | । | ऽ | । | ऽ | । | ऽ |
| | | | ४२+१ | | | |
| | | | ४३ | | | |

| १ | २ | ४ | ८ | १६ | ३२ | ६४ | १२८ |
|---|---|---|---|---|---|---|---|
| । | ऽ | । | ऽ | । | ऽ | । | ऽ |

१७० + १

१७१

| १ | २ | ४ | ८ | १६ | ३२ | ६४ | १२८ | २५६ | ५१२ |
|---|---|---|---|---|---|---|---|---|---|
| । | ऽ | । | ऽ | । | ऽ | । | ऽ | । | ऽ |

३४१ + १

३४२

| १ | २ | ४ | ८ | १६ | ३२ | ६४ | १२८ | २५६ | ५१२ | १०२४ | २०४८ | ४०९६ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ऽ । | ऽ । | ऽ | । | ऽ | । | ऽ | । | ऽ | । | ऽ | । | ऽ |

२७३०+१

२७३१

|  |  |  |  |  | १ |  |
|---|---|---|---|---|---|---|
| ऽ | । | ऽ | । | ऽ | । | ऽ |
| ४३ | २२ | ११ | ६ | ३ | २ |  |

|  |  |  |  | १ |  |
|---|---|---|---|---|---|
| । | । | । | । | । | ऽ |
| ३२ | १६ | ८ | ४ | २ |  |

|  |  |  |  |  |  | १ |
|---|---|---|---|---|---|---|
| ऽ | ऽ | ऽ | ऽ | ऽ | ऽ | । |
| ६५ | ३३ | १७ | ९ | ५ | ३ | २ |

|  |  |  |  |  |  |  |  |  |  |  | १ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ऽ | । | ऽ | । | ऽ | । | ऽ | । | ऽ | । | ऽ | । |
| २७२१ | १३६१ | ६८१ | ३४१ | १७१ | ८६ | ४३ | २२ | ११ | ६ | ३ | २ |

अनेनैव प्रकारेण सर्वत्रोद्दिष्टं विदध्यात् ॥

साम्प्रतमुक्तादिषु सर्वगुर्वेकलघुद्विलघुत्रिलघ्वादिपाद-वृत्तकथनद्वारा प्रस्तारशोधनायैकद्व्यादिलगक्रियामाह—

यस्य वृत्तस्य गुरुलघुभेदं ज्ञातुमिच्छेत्तस्य तावतिथानङ्कानौत्तराधर्येण सैकान्विन्यसेत्। तेषु चाधस्तनमेकाङ्कं तदु-

पर्यैकाङ्के मेलयित्वा तत्पार्श्वे द्व्यङ्कं कुर्यात्। तं तृतीयैकाङ्के संयोज्य त्र्यङ्कं कुर्यादित्येवमुत्तरोत्तरं विदध्यात्। उपान्त्य-पर्यन्तं मेलनं कृत्वा अन्तिमं त्यजेत्। एवं द्वितीयादिपङ्क्तावपि–उपान्त्यमाप्यान्तिमं तदपेक्षया जह्यात्॥

एवं सिद्धेऽङ्के प्रथममेकः सर्वगुरुस्तदधस्तनाङ्कसंख्य एकलघुस्तदधोऽङ्कसंख्याः द्विलघवश्चतुर्थोऽङ्कसंख्यास्त्रिलघवः सर्वाधोगताङ्कसंख्यः सर्वलघुरिति विजानीयात्॥

एवमेव प्रथमाङ्कगः सर्वगुरुर्द्वितीयाङ्कग एकगुरुस्तृतीयाङ्कगोद्विगुरुश्चतुर्थाङ्कगस्त्रिगुरुरिति क्रमेण सर्वाधस्तनाङ्कगोलघुः सर्वथा ज्ञेयः। यथा–

सर्वगः<br>
१ (त्र्यक्षरे ८)<br>
१ ३ द्विगाः<br>
१ २ ३ एकगाः<br>
१<br>
सर्वलः

सर्वगः<br>
१<br>
१ ५ चतुर्गाः पञ्चाक्षरे ३२<br>
१ ४ १० त्रिगाः<br>
१ ३ ६ १० द्विगाः<br>
१ २ ३ ४ ५ एकगाः<br>
१<br>
सर्वलः

सर्वगः<br>
१ (चतुरक्षरे १६)<br>
१ ४ त्रिगाः<br>
१ ३ ६ द्विगाः<br>
१ २ ३ ४ एकगाः<br>
१<br>
सर्वलः

१<br>
१ ६<br>
१ ५ १५ षडक्षरे ६४<br>
१ ४ १० २०<br>
१ ३ ६ १० १५<br>
१ २ ३ ४ ५ ६<br>
१

| | | | |
|---|---|---|---|
| १ | | १ | |
| १ ७ | | १ ८ | |
| १ ६ २१ | सप्ताक्षरे १२८ | १ ७ २८ | अष्टाक्षरे २५६ |
| १ ५ १५ ३५ | | १ ६ २१ ५६ | |
| १ ४ १० २० ३५ | | १ ५ १५ ३५ ७० | |
| १ ३ ६ १० १५ २१ | | १ ४ १० २० ३५ ५६ | |
| १ २ ३ ४ ५ ६ ७ | | १ ३ ६ १० १५ २१ २८ | |
| १ | | १ २ ३ ४ ५ ६ ७ ८ | |
| | | १ | |

एवमग्रेपि यथेष्टमेकद्व्यादिलघुगुरूनूह्यात् ।

साम्प्रतं प्रस्तारमन्तरापि वृत्तसंख्यापरिज्ञानाय संख्यामाह–

द्विरर्द्धे ॥ २८ ॥

जिज्ञासितवृत्ताङ्कादर्धे अपनीते या संख्या लभ्येत तां भूमौ विन्यसेत् । ततोऽवशिष्टा संख्या विषमा चेत्तदा किं कार्यमत्राह–

रूपे शून्यम् ॥ २९ ॥

विषमसंख्यातोरूपमपनीय शून्यं लभ्यते तत्पूर्वलब्धाङ्कस्याधो विन्यसेत् । ततो या संख्याऽवशिष्येत ततो प्यर्धेऽपनीते पुनः सैव संख्या लभ्यते तां शून्याधस्ताद्रक्षयेत् । ततोरूपे शून्यं तत्पूर्वशून्यस्याधः स्थापयेत् । ततः पुनरपि रूपे शून्यं लब्धाङ्कस्याधो निधाय किं कुर्यादत्राह–

द्विः शून्ये ॥ ३० ॥

निराकारााया आवृत्तेरसम्भवात्प्रथमातिक्रमे च कारणाऽभावाल्लब्धमङ्कं शून्ये ( शून्यस्थाने ) द्विगुणयेत् । एवं द्वैगुण्येन लब्धमऽङ्कं तदूर्ध्वगतनिरसिताऽङ्ककोष्ठे विन्यस्य किमनुष्ठेयमित्यत्राह–

तावदर्धे तद्गुणितम् ॥ ३१ ॥

तदेवाङ्कं तेनैवाङ्केन गुणितं विधाय चातुर्गुण्येन लब्धाङ्कं तदूर्ध्वगतशून्यकोष्ठे निधाय पुनश्च तस्य द्वैगुण्येन लब्धाङ्कानर्धस्थाने निवेश्य तावद्गुणान्कृत्वा पुनर्लब्धमङ्कं तेनैव गुणयेत्। एवमभिमतकार्य्यसिद्धिरुपजायते। यथा-

षडक्षरे गायत्रे षट्संख्याभ्यामर्द्धेऽपनीते द्व्यङ्के स्थापितेऽवशिष्टास्त्रयस्तेषु रूपमपनीय द्व्यङ्काधः शून्यं स्थाप्यम्। यथा-२।० अवशिष्टद्विसंख्यातोऽर्धेऽपनीते शून्याधो द्विसंख्या लेख्या। यथा-२।०।२। ततोऽवशिष्टरूपं तदपनीय द्व्यङ्काधः शून्यं स्थाप्यम्। यथा-२।०।२।०। अधः शून्येएकाङ्कं द्विगुणं न्यस्य तं द्व्यङ्कमर्धस्थाने स्थितमपनीय तत्स्थाने निधाय तं तावद्गुणं कुर्य्यात्। ततो द्वौ द्वाभ्यां गुणितौ चत्वारो भवन्ति। तेषामुपरिष्टाच्छून्यस्थाने तं निधाय शून्यस्थानाङ्कत्वाद् द्विगुणयेत्। ततोऽष्टौ भवन्ति-तानप्यर्धस्थाने निधाय तावद्गुणान्कुर्य्यात्। तेनाष्टावष्टभिर्गुणिताश्चतुःषष्टिर्भवन्ति गायत्र्यां समवृत्तानि। एवं सर्वत्र समवृत्तसंख्या ज्ञेया सा च तत्र २ निदर्शितैव ॥

साम्प्रतं पूर्वापरसमस्तच्छन्दोभेदनिर्णयाय सूत्रकारः सूत्रमुखेन प्रकारमाह-

द्विर्न्यूनं तदन्तानाम् ॥ ३२ ॥

यदैतज्ज्ञात्यन्तानि कति समवृत्तानीति संख्याजिज्ञासा स्यात्तदा विवक्षितप्रान्तच्छन्दः समवृत्तसंख्यां द्विगुणयेत्। तन्मध्ये द्वावपनयेत्। अवशिष्टा विवक्षितजातिपर्यन्तानां

समवृत्तानां संख्या। यथा—चतुरक्षरे षोडश समवृत्तानि। तेषां द्वैगुण्ये द्वात्रिंशत्। द्वयोरपनयने तदन्तानां संख्या [३०]॥

| | | |
|---|---|---|
| प्रथमाक्षरप्रस्तारे<br>द्वौ भेदौ २ | त्र्यक्षरप्रस्तारे<br>८ भेदाः | २<br>४ |
| द्व्यक्षरप्रस्तारे<br>चत्वारो भेदाः ४ | चतुरक्षरप्रस्तारे<br>१६ भेदाः | ८<br>१६ |
| | योगः | ३६ |

एवमुक्तेर्भेदाः [ ६७१०८८६४ ] एतद्द्वैगुण्ये द्वयोर्हानिः [ १३४२१७७२६ ] एतावन्ति सर्वाणि समवृत्तानि ॥

यदा विवक्षितजातेरुत्तराणि कति वृत्तानीति जिज्ञासा चेत्तदा किं कार्यमत आह—

**यथावस्थितिः ॥ ३३ ॥**

पूर्वसूत्रे यद् द्विगुणाङ्कस्य द्व्यूनत्वं विहितं तन्नात्र युज्यते। जिज्ञासितवृत्तस्य द्विगुणा संख्या यथाऽवस्थितैवाग्रिमवृत्त संख्याबोधिका जाजायते। यथा—गायत्री समवृत्तानां चतुःषष्टिः संख्या ६४ द्विगुणिता सती १२८ परस्योष्णिहो वृत्तसंख्याभेदबोधिका भवति। एवमन्यदप्यूह्यम् ॥

साम्प्रतमनेकद्वित्रिलघुक्रियासिद्ध्यर्थं सूत्रकारः सूत्र मुखेन मेरुप्रस्तारमाह—

**परे पूर्णं परे पूर्णमिति ॥ ३४ ॥**

द्विरभ्यासोऽध्यायसमाप्तिसूचकः। इति शब्दोग्रन्थ-समाप्तिसूचकश्च। तत्रादावेकं चतुष्कोणं कोष्ठं लिखेत्। तदधउभयतोर्द्धनिष्क्रान्तं कोष्ठद्वयम्। तदधस्तथैव त्रयम्।

तदधस्तथैव चतुष्टयम्। एवं षड्विंशति कोष्ठान्तं विधेयम्। आद्यकोष्ठे प्रथममेकाङ्कोनिवेश्यः। पुनः सूत्रं योज्यम्। अर्थातपरे सर्वतऊर्ध्वे कोष्ठे यद् वृत्तसंख्याङ्कं विन्यस्तं तत्तदधस्तनकोष्ठयोर्मध्ये पूर्णं निवेश्यम्। अतः परमाद्यन्तकोष्ठेष्वेकाङ्को निवेशनीयः।

तृतीयपङ्क्तौ शून्ये मध्यमकोष्ठे तदुपरिगतकोष्ठद्वयगतौ एकाङ्कावेकीकृत्य द्व्यङ्कं विन्यसेत्। एवं चतुर्थपङ्क्तौ मध्यकोष्ठयोरुपरिगतकोष्ठद्वयाङ्कमेकीकृत्य त्र्यङ्कौ। एवं सर्वत्रोपरितनकोष्ठद्वयाङ्कमेकीकृत्याऽधस्तनकोष्ठेषु यावदभिमतमभिन्यसेत्। एवमभिमतसिद्धिरुपजायते। सा चार्यजनबोधाय दिङ्मात्रं निदर्श्यते। यथा–

अत्र दक्षिणभागे वर्णसंख्या वामभागे च तद्भेदसंख्या। अनेनैव प्रकारेण षड्विंशतिकोष्ठात्मकमेरुविरचनं विधे-

यम् । गुरुलघुसंख्यासूचकत्वादियमेव सूचिः । मेरुसंस्थानत्वाच्च मेरुः । तदुद्धारप्रकारो यथा—

द्विकोष्ठवत्यां द्वितीयपङ्क्तावत्रैकाक्षरप्रस्तारः । तत्रैक गुर्वेकलघु वृत्तं जायते । कोष्ठत्रयवत्यां तृतीयपङ्क्तौ द्व्यक्षरः । तत्राद्यं सर्वगुरु । द्वे एकलघुनी । एकं सर्वलघु । कोष्ठचतुष्टयवत्यां चतुर्थपङ्क्तौ त्र्यऽक्षरः । तत्रैकं सर्वलघु । एकञ्च सर्वगुरु । त्रीण्येकलघूनि । त्रितयमेव द्विलघु । कोष्ठ पञ्चकवत्यां पञ्चमपङ्क्तौ चतुरऽक्षरः । तत्राद्यं सर्वगुरु । चत्वार्येकलघूनि । षड् द्विलघूनि । चत्वारि त्रिलघूनि । एकं सर्वलघु । अनेनैव प्रकारेणैकद्वित्र्यादिलघुगुरुक्रिया सर्वेषु कोष्ठेषु ज्ञेयेति भावः ॥

एवं गाथाप्रकरणानन्तरं प्रस्तारनष्टोद्दिष्टैकद्व्यादिलगक्रिया संख्या पूर्वयोग परयोग मेरुवर्णनं विधायाऽवसितप्रतिज्ञाभारोभाष्यकारः पारम्पर्यक्रमाऽऽगतमहत्त्वसूचनाऽर्थं स्ववंशपित्रादिगुणप्रतिपादनपूर्वकं भाष्यकृतिमुपसंहरति ॥

“लब्ध्वा यत्र जनिं पितामह इतिख्यातोऽभवद् भूतले।
सृष्ट्वानेकजनानपत्यदशकैर्भावान्तरैरब्जभूः ॥
पौत्रानप्रतिमेयसंख्यकरणानात्मीयशक्त्या पुरा ।
धन्यो मान्यगुणः सदा विजयते वंशः स नन्दयाभिधः” ॥१॥

“तस्मान्निप्रवरस्थलीविटपविर्माध्यन्दिनः पाठकी
वंशः प्रादुरभून्नवेन्दुरुचिरः स्वाध्यायदत्तान्तरः ।
यस्मिन्नप्रणतानतप्रणयिनो विप्राः सनाढ्याभिधाः
प्रावर्तन्त बहुश्रुताअविरतं देवं भजन्तः परम्” ॥ २ ॥

"ते गङ्गाङ्गणसन्निभेऽतिरुचिरे यागानुकूलस्थलं
देशे प्राप्य सुखेन चन्दनगराभिख्यं समेत्याऽवसन् ।
स्वाध्यायाऽभ्यसने निरन्तरकृतायासा मुनीशा इव
प्राणायामपरायणा विधिविधावादत्तसर्वेन्द्रियाः" ॥ ३ ॥

"यात्येवं समयेऽङ्ग तत्र नगरे विभ्रद्दयदान्ताकृति-
र्जातस्तेषु जवाहरेति निपुणः सूरिर्जगद्द्योतयन् ।
यः शास्त्रार्थरणाऽङ्गणेऽनतिपरां कीर्तिं जवादाहरन्
अन्वर्थामकरोत्कथंकथमपि स्वीयामभिख्यामलम्" ॥४॥

"तस्याभूत्तनयो भगीरथ इति स्वं नाम योऽभूषयत्
गङ्गातोऽप्यधिकां स्वकीर्तिसरितं विस्तार्य लोकत्रये ।
नैजैराचरणैरमन्दचरितो लोकैकसंचारिणीं
वारंवारविचारचारितमना देवानपि स्पर्धते" ॥ ५ ॥

"तस्मादप्रतिमेयसद्गुणगणो विद्यावधूनायकः
पूज्यस्तत्र भवान्भुवो मणिरिवाऽऽपाण्डुर्यशोभिर्निजैः ।
धाम्नां धाम धृतेर्धनं धवलिमाधूरप्रमेयप्रभ-
श्छोकाराम इति प्रतिष्ठितलसन्नामाऽभवत्पण्डितः" ॥६॥

"यः सामाजिकसभ्यवर्यनिचयैराविष्टितः सर्वदा
कालेऽस्मिन्नपि भूतपूर्वचरितं संदर्शयन्गौरवात् ।
वेदाभ्यासमहोत्सवैककरणैर्लोकं पुनानः स्वकं
पाण्डित्यं चरितार्थतामहरहो निन्ये विनीताऽबलः" ॥७॥

"मन्दं मन्दमुपेयुषि स्वसमये मामात्मजं यौवने
सानन्दं रमयन्रमामिव रहो रम्यां सुबुद्धिं वधूम् ।

बारम्बारमुपेक्षितोपि विषयैर्लोकानुरोधाद्भृशं
सन्मत्यां विबुधोयथा गुणमिवानन्दप्रदं लब्धवान्" ॥८॥

"सोहं मन्दमतिर्गतेऽमरपुरं तातेऽनुयुक्तोबुधै
स्तत्तत्कृत्यवशेन संव्यरचयं सद्भाष्यमेतन्नवम् ।
वेदाङ्गस्य कृते नवीनरचनावाञ्छावतां संपदा
बद्धैः पद्यशतैरनेकविषयाविद्धैरनन्तप्रभैः" ॥ ९ ॥

"तामेतां कवयो विमत्सरतया पश्यन्तु मे चेत्कृतिं
यायामात्मपरिश्रमैकसुलभं कार्तार्थ्यमार्तोप्यहम् ।
मानं यर्हि सदन्तरेषु निभृतं तिष्ठन्तु ते दूरतो
हृष्टाएव सरस्वती वशमनुप्राप्ता वयं रागिणः" ॥ १० ॥

"रम्ये माधवमासि पुण्यसमये वारे गुरावादरा-
दब्दे वेदतदङ्गसद्ग्रहकलाधीशैर्मिते सत्तिथौ ।
पञ्चम्यामतुलप्रभोयमखिलानन्दाभिधानः कवि
स्तातानां कृपया परिश्रमविधौ निश्चिन्ततामाप्तवान्" ११

इति श्रीमद्वर्तमानकविरत्नाऽखिलानन्दशर्म
प्रणीतवैदिकभाष्योपेते छन्दः सूत्रे
प्रस्तारादिविवेचनं नामा-
ऽष्टमोऽध्यायः
समाप्तोयं ग्रन्थः ॥

ओ३म् शान्तिः ३

प्रारम्भदिनम् २० । २ । ०६] [अवसानदिनम् १८ । ४ । ०७

छन्दो द्विधा
वैदिकं
लौकिकं च
लौकिकं त्रेधा
गणच्छन्दः
मात्राच्छन्दः
अक्षरच्छन्दः
आर्यादि
वैतालयादि
श्यादि
तत् त्रेधा
समम्
अर्धसमम्
विषमं च
समपादम्
अर्धसमपादम्
विषमपादम्
समं द्वेधा
साधारणम्
दण्डकं च
दण्डकं त्रेधा
वृत्तगन्धि
चूर्णम्
उत्कलिकम्

| गणः | संयोगः | फलाऽफलम् |
| --- | --- | --- |
| मनौ मित्रे | मित्रम्+मित्रम् | सिद्धिः |
| | मित्रं+दासः | जयः |
| | मित्रम्+उदासीनः | हानिः |
| | मित्रं+शत्रुः | सुहृन्मृत्युः |
| भयौ भृत्यौ | दासः+मित्रम् | सिद्धिः |
| | दासः+दासः | हानिः |
| | दासः+उदासीनः | दुःखम् |
| | दासः+शत्रुः | पराजयः |
| जरावुदासीनौ | उदासीनः+मित्रम् | दुःखम् |
| | उदासीनः+दासः | दुःखम् |
| | उदासीनः+उदासीनः | दुःखम् |
| | उदासीनः+शत्रुः | दुःखम् |
| तसौ नीचौ | शत्रुः+मित्रम् | शून्यम् |
| | शत्रुः+दासः | स्त्रीनाशः |
| | शत्रुः+शत्रुः | शङ्का |
| | शत्रुः+उदासीनः | नाशः |

()